# यिशायियस्य भविष्यद्वाक्यानि ।

---

## १ प्रथमोऽध्यायः ।

१ यिहूदायाम् यिशयियस्य निरूपणं ५ पापिनां दण्डः १० निष्फलधर्म्मस्य भर्त्सनं १६ पापात् परावर्त्तितुं विनयनं २१ लोकानां पापकथनं २४ साधोर्हितकरणस्य असाधोरहित-भोगकरणस्य च कथनञ्च ।

१ हिष्किय उषियो योथम् आहस भूमिपा इमे ।
राजधान्यां यिहूदाया यदा कुर्व्वन्ति शासनं ।
तदा यिशयियो नाम्ना आमोषाख्यस्य यः सुतः ।
सोऽधीदं दर्शनं प्राप्तो यिहूदायिरूशालमौ ॥

२ हे आकाश शृणु त्वं हे पृथिवि त्वं संशृणु ।
परेशो वक्त्यपत्यानि पालयामि विवर्द्धि च ।
किन्तु मदीयमादेशं ते सन्ताना न मेनिरे ।
३ सौरभिः परिजानाति स्वामिनन्तु स्वकीयकं ।
रासभः स्वप्रभोर्दत्तं जानाति भक्ष्यभाजनं ।
किन्तु मां न विजानाति इस्रायेलीयसन्ततिः ।
तथा मदीयलोकाश्च न कुर्व्वन्ति विवेचनं ।
४ हा हा पापिष्ठसन्ताना कर्म्मभारप्रपीडिताः ।

अमोरीया न ईश्वस्य विधाने धन्त मानसं ।

११ प्रभूतबलिदानेषु युष्माभिः संकृतेषु च ।
प्रयोजनं ममास्ते किम् इत्याह परमेश्वरः ।
मेषाहुत्या च पूर्णोऽस्मि मेदैः पुष्टपशोरपि ।
वृषमेषशिशुच्छागरक्तैस्तुष्टिर्ममास्ति न ।

१२ मद्दर्शने पदान् चेतुं मां साक्षात् कर्त्तुमेव च ।
युष्माकं सन्निधावेतत् केन संपरियाचितम् ।

१३ नैवेद्यानि मदासन्नं नानयेत मुधा पुनः ।
सौगन्ध्यजनको धूपो मया पूर्व्वम् घृणीयितः ।
सभाहूतिरमावास्या विश्रामवासरो व्रतम् ।
कार्य्यत्यागदिनञ्चेति सोढुं शक्तोऽस्म्यहं नहि ।

१४ युष्माकं मासिकं पर्व्व उत्सवो यस्तु वार्षिकः ।
घृणीयते मदीयेनो मामकीनस्तु मानसम् ।
तदहं भारबोधेन बोढुं श्रान्तो भवामि च ।

१५ कृताञ्जलिषु युष्मासु छादयिष्यामि लोचने ।
नाहं श्रोष्यामि युष्माभिः प्रार्थितान्यपि भूरिशः ।
यतो युष्मत्कराः सन्ति परिपूर्णा हि शोणितैः ॥

१६ यूयं निजान् परिक्षाल्य भवत सुपरिष्कृताः ।
मम गोचरतः पापं कर्म्म दूरे निधाय च ।
असत्कर्म्माणि संत्यज्य शिक्षध्वं साधु कर्म्म हि ।

१७ उपकुरुत संचेष्ट्य न्यायेनोपद्रुतान् जनान् ।
पितृहीना विचार्य्यन्तां पतिहीनास्तथा स्त्रियः ।
१८ परेशः कथयत्येतत् कुरुध्वं यूयमागमं ।
उत्तरं प्रतिवाक्यञ्च संवदामो वयं मिथः ।
तेन वो लोहितं पापं हिमशुभ्रं भविष्यति ।
सिन्दूरवच्च मेषाणां लोमवत् शौक्ल्यमेष्यति ।
१९ यूयं यदीच्छवः स्यात निदेशपालकास्तथा ।
तर्हि देशोद्भवं द्रव्यं भोक्ष्यध्वे सर्व्वमुत्तमम् ।
२० किन्तु यूयं यदि स्यात मन्यमान्याश्च न क्वचित् ।
अनाज्ञायाहिणस्तर्हि खड्गभुक्ता भविष्यथ ।
एताः कथाः परेशस्य स्वीयवक्त्राद्विनिःसृताः ॥
२१ विश्वास्या नगरी कीदृक् स्वैरिणी समजायत
पूर्णा न्याय्यविचारेण तस्यां धर्म्मोऽवसत् पुरा ।
किन्त्विदानीं वसन्त्यत्र ये नरा वधकारिणः ।
२२ तद्रूप्यं मलसंयुक्तं तद्द्राक्षा जलमिश्रिता ।
२३ अनाज्ञायाहिणोऽध्यक्षा भवन्ति चौरबान्धवः ।
तेषामेकैकशो लोक उत्कोचे परिप्रीयते ।
तथोपढौकनं प्राप्तुं चेष्टन्ते सकला जनाः ।
विचारं नहि कुर्व्वन्ति पितृहीनजनस्य ते ।
विधवानां विचारो न तेषां भवति गोचरे ॥

२४ अतः सेनाधिपो यः स वदेत् प्रभुपरेश्वरः ।
इस्रायेलीश्वरो यः स कथयेत् सर्व्वशक्तिमान् ।
अहं स्वकीयशत्रुभ्यः प्रदास्याम्युचितं फलं ।
परिपन्थिमनुष्येभ्यो मया दण्डः प्रदास्यते ।
२५ अहं त्वयि पुनर्व्वारम् अर्पयित्वा निजं करं ।
क्षारैः परिष्करिष्यामि त्वदीयं सकलं मलं ।
त्वत्तो दूरीकरिष्यामि सकलानि मलानि ते ।
२६ पुनश्च पूर्व्ववत् तुभ्यं प्रदास्यामि विचारकान् ।
तथा प्रथमवत् तुभ्यं सम्प्रदास्यामि मन्त्रिणः ।
तेन धर्म्मपुरीति त्वं विश्वास्यनगरीति च ।
नाम्ना पुनश्च सम्यक् त्वं प्रविख्याता भविष्यसि ।
२७ सियोन् पुरं विचारेण मुक्तिं प्रति प्रयास्यति ।
तस्य परावृत्ता धर्म्मेणोद्धारमुपयान्ति च ।
२८ युगपत् नाशमेष्यन्ति पापिनोऽधार्म्मिकाश्च ये ।
विनंक्ष्यन्ति च ते लोका ये त्यजन्ति परेश्वरम् ॥
२९ अधोष्टद्रुमभेलोमं युष्माभि र्लप्स्यते त्रपा ।
स्वमनोनीत उद्याने विवर्णाश्च भविष्यथ ।
३० यतः शुष्कदला एलाः पादपा इव सर्व्वथा ।
निर्जलोद्यानतुल्याश्च यूयमेव भविष्यथ ।
३१ मनुजः कोष्णपट्टेन भविष्यति समो बलः ।

वह्निस्फुलिङ्गतुल्यञ्च तस्य कार्य्यं भविष्य[illegible]

उभौ तेनैव युगपत् ज्वलितौ प्रभविष्यतः ।

न निर्व्वापयितुं कोऽपि मानवः परिशक्ष्यति ॥

२ द्वितीयोऽध्यायः ।

१ ख्रीष्टराज्यस्य कथनं ६ परमेश्वरत्यागस्य दोषनिर्णयः तदीयमहिमकारणात् तस्मात् भेतुं विनयश्च ।

१ आमोषाख्यस्य यः पुत्रो यिशयियाभिधानक

अधीदं दर्शनं प्राप्तो यिहूदायिरूशालमौ ॥

२ ईदृशी चरमे काले घटना संभविष्यति ।

स्थापिष्यते ऽचलाग्रेषु परेशस्यपर्व्वतः ।

उच्चीकृतो भविष्यति स उपपर्व्वतादपि ।

स्रोतोवत् तं जनाः सर्व्वे गमिष्यन्ति देशजाः ।

३ गच्छन्तो बहुजातीया वदिष्यन्ति कथामिमां ।

आगच्छत वयं याम परमेश्वरपर्व्वतं ।

अर्थाद् याकूबईश्वरस्य वयं गच्छाम मन्दिरं ।

स एव पदवीं स्वीयाम् अस्मान् प्रशिक्षयिष्यति ।

तेनैव वर्त्मना तस्य करिष्यामो गतिं वयम् ।

यतएव व्यवस्था च सियोनो निर्गमिष्यति ।

यिरूशालम् नगर्य्याश्च वचनं परमेशितुः ।

४ तथान्यनेकजातीनां स विचारं करिष्यति ।

११ नरस्य गर्व्विता दृष्टिरतिखर्व्वा भविष्यति ।
नश्वरस्य मनुष्यस्य गर्व्वः खर्व्वो भविष्यति ।
उच्चंस्थति दिने तस्मिन् केवलः परमेश्वरः ।
१२ सेनाध्यक्षपरेशस्य दिनं यत् परमं महत् ।
उच्चवस्तुविरुद्धञ्च समस्तोन्नतवस्तुनः ।
विपरीतमुपस्थाता तेन तद्वस्तु नंस्यते ।
१३ लिवानोनेर्या ऊर्द्धाम् उच्चोच्चानां विरक्षुनः ।
वाशानदेशस्थानां सर्व्वेषां विपरीतकं ।
१४ मोच्चतानाञ्च सर्व्वेषां शैलानां विपरीतकं ।
सर्व्वेषामुपशैलानामुच्चानां विपरीतकं ।
१५ सर्व्वेषामपि दुर्गाणामुच्चानां विपरीतकं ।
प्राचीराणाञ्च सर्व्वेषां दृढानां विपरीतकं ।
१६ तार्शीशि स्थितपोतानां सर्व्वेषां विपरीतकं ।
मनोहारकचित्राणां सर्व्वेषां विपरीतकं ।
उपस्थिति र्ई तस्यैव दिवसस्य भविष्यति ।
१७ तेनोन्नति र्मनुष्यस्य नता सम्यग् भविष्यति ।
नश्वरस्य मनुष्यस्य गर्व्वः खर्व्वो भविष्यति ।
उच्चंस्थति दिने तस्मिन् केवलः परमेश्वरः ।
१८ भविष्यति तदा लुप्तः सर्व्वथा प्रतिमागणः ।
१९ आहन्तुं सहसा पृथ्वीं यदोत्थाता परेश्वरः ।

तदा लोकाः परेशस्य महिम्नस्तेजस स्तथा।
भयानकत्वात्तस्यैव पर्व्वतानां गुहासु च।
भूमे र्गर्त्तेषु सर्व्वेषु करिष्यन्ति प्रवेशनं।

२० आहन्तुं शक्त्या पृथ्वीं यदोत्थाता परेश्वरः।

२१ तदा मनुष्याः पूजार्थं स्वस्वैः परिनिर्म्मिताः।
प्रतिमाः स्वर्णरौप्याणाम् उपाकोरजिनस्तथा।
निक्षिप्य परमेशस्य महिम्नस्तेजस स्तथा।
भयानकत्वात् तस्यैव पर्व्वतानां गुहासु च।
पर्व्वतानां शिरोर्द्धेषु करिष्यन्ति प्रवेशनं।

२२ अतएव स्वनासाये प्राणान् संधारयन्ति ये।
तेषु सर्व्वमनुष्येषु माविश्वसीः कदाचन।
यतो हेतो र्न कस्यापि मध्ये गण्यः स जायते॥

३ तृतीयोऽध्यायः।

१ पापे लोकानां दुःखं १२ प्रधानजनैरुपद्रवः १६ स्त्रीणाम् अहङ्कारस्य दण्डश्च।

१ पश्य प्रभुश्च सैन्यानामधिपः परमेश्वरः।
यिरूशालम् यिहूदाभ्यां यष्टिञ्चाप्यवलम्बनं।
तोयस्य यष्टिवद् भक्ष्यं सर्व्वं दूरीकरिष्यति।

२ बलिनं योधिनञ्चैव विचारकारिणं तथा।
भविष्यद्वादिनञ्चैव गुणिनं प्राचमेव च।

३ पञ्चाशतोऽधिपञ्चैव मानिनं मन्त्रिणन्तथा।

वशीकरणविद्यायाञ्च सर्व्वेषु निपुणजना ।
एतान् सर्व्वान् मनुष्यांश्च परेशो दूरयिष्यति ।
४ तेषामुपरि राजानं करिष्ये बालकानहं ।
तेषामुपरि राजत्वं शिशुलोकाः करिष्यति ।
५ करिष्यन्ति जनाः सर्व्वे परस्परमुपद्रवम् ।
उपद्रोष्यति सर्व्वोपि स्वस्वासन्ननिवासिषु ।
कलहं प्रकरिष्यन्ति बाला वृद्धविरुद्धतः ।
अहङ्कारं करिष्यन्ति महत्सु नीचमानुषाः ।
६ अतः केचिद्वदिष्यन्ति भ्रातरं पितृवंशजं ।
एहि ते विद्यते वस्त्रं त्वमस्माकं नृपो भव ।
इदं राज्यं त्वमस्माकं नष्टदेशं प्रगृह्ण च ।
७ किन्तु तस्मिन् दिने तेन शपथैर्व्वदिष्यते ।
अहं नहि भवामीह चिकित्साकर्म्मकारकः ।
यतो मम गृहे खाद्यं वस्त्रञ्च नास्ति किञ्चन ।
आधिपत्यं नृणां कर्त्तुं नहि मां त्वं नियोजय ।
८ कम्पिष्यति यिरूशालम् यिहूदा निपतिष्यति ।
यतो महत्त्ववचनैः कोपयितुं परेशितुः ।
तेषां कर्म्माणि जिह्वा च ईशस्य प्रातिकूलिनी ।
९ प्रमाणयति तेषाञ्च विरुद्धं तन्मुखाकृतिः ।
यत्नैः सिदोमवत् पापं न प्रगोप्य प्रकाश्यते ।

अतस्तेषां निजात्मनो सन्तापः संघटिष्यते ।
अतः स्वकीयदुःखानि स्वयं संजनयन्ति ते ।
१० यूयं वदत धार्म्मिष्ठान् शुभमेतेषां भविष्यति ।
तैस्तु स्वस्वक्रियोद्भूतफलमेव प्रभोक्ष्यते ।
११ धिक् पापिनस्तु यत्तेषामशुभं संघटिष्यते ।
भोक्ष्यते तैः फलं मर्त्यैः स्वहस्तकृतकर्म्मणाम् ।
१२ ये मानवा मदीयास्तान् बाला उपद्रवन्ति च ।
आधिपत्यञ्च कुर्व्वन्ति तेषामुपरि योषितः ।
हे मल्लोका जना ये तु युष्माकमग्रगामिनः ।
भ्रमयन्ति च ते युष्मान् वर्त्म वो नाशयन्ति च ॥
१३ परमेशो विचारार्थं समुत्थानं करिष्यति ।
विचारे मानवैः सार्द्धं समुत्तिष्ठति च स्वयम् ।
१४ परेश्वरः स्वलोकानां प्राचीनमानवैः सह ।
सार्द्धमध्यक्षलोकैश्च विचारमेत्य वक्ष्यति ।
द्राक्षाक्षेत्री मदीया च युष्माभिः परिनाशिता ।
दीनानां लुण्ठितं वस्तु युष्माकं सदने ऽस्ति च ।
१५ सैन्याध्यक्षः प्रभुर्युष्मान् इदं वक्ति परेश्वरः ।
दृश्यन्ते मम यल्लोका दीनवक्त्राश्च चूर्ण्यते ।
युष्माभिस्तच्च युष्माकं कोऽभिप्रायोऽभिविद्यते ॥
१६ परमेशः पुनर्ब्रूते सियोनः कन्यका इमाः ।

साहङ्कारा: प्रगच्छन्ति तथा संस्फीतवचस: ।
नेत्रै: कटाक्षं कुर्व्वन्ति व्यङ्गं कृत्वा चलन्ति च ।
पादेषु शिञ्जितं शब्दं प्रकुर्व्वत्य: प्रयान्ति च ।
१७ अत: प्रभु: शिरस्तासां कर्त्ता खलतिसंयुतं ।
तासां गुह्यप्रदेशस्य परेशो नग्नयिष्यति ।
१८ प्रभुस्तस्मिन् दिने तासां भूषणानि ग्रहीष्यति ।
१९ नूपुरं जालिवस्त्रञ्च चन्द्रहारकमेव च ।
कङ्कणं कर्णभूषाञ्च शिर: प्रच्छादनन्तथा ।
२० उरच्छदञ्च शिरोवस्त्रं कटिसूत्रन्तथैव च ।
२१ सुगन्धिभाजनञ्चैव केयूरमङ्गुरीयकं ।
२२ नासास्वर्णाङ्गुरुकं चित्रं मेखलाकाद्सम्पुटा: ।
२३ आतसं सूक्ष्मवस्त्रञ्च उष्णीषमुत्तरीयकं ।
इत्यादीनि समस्तानि मोचयन् स ग्रहीष्यति ।
२४ विनिमय्य सुगन्धिं स दुर्गन्धं दास्यति ध्रुवं ।
उत्तमं कटिबन्धञ्च रज्जुदानं करिष्यति ।
सुन्दरं केशविन्यासं खल्वतिं परिदास्यति ।
वस्त्रबन्धं पराहृत्य शाणबन्धं प्रदास्यति ।
चारुरूपं पराहृत्य कलङ्कं सम्प्रदास्यति ।
२५ खड्गाघातै: पतिष्यन्ति युष्माकं सकला नरा: ।
संग्रामे निपतिष्यन्ति युष्माकं बलिनो नरा: ।

२६ अनाथीभूय सा भूमौ नगरी निपतिष्यति।
तस्या द्वारि विलापश्च क्रन्दनञ्च भविष्यति॥

४ अध्यायः।

विपत्काले सीहस्य राज्याश्रयस्थानकथनं।

१ पुरुषैकं तदा धृत्वा वक्ष्यन्ति सप्त योषितः।
खादिष्यामो वयं स्वान्नं धरिष्यामो निजांशुकं।
स्वनाम्नास्मान् प्रविख्याप्यापमानं नो विदूरय।
२ तदा परेश्वितुः शाखा रूपतेजस्विनी भवेत्।
दृश्रायेल् वंशजा लोकाः संजीविष्यन्ति ये तदा।
तेषां क्रते फलं देशे भविष्यत्युत्तमोत्तमं।
३ सियोनि ये च तिष्ठन्ति यिरूशालमि ये जनाः।
यिरूशालम् पुरस्थानां येषां नाम लिखिष्यते।
पवित्रनामविख्याता भविष्यन्ति हि ते नराः।
४ परेश्वता विचारेण प्रभावाज् ज्वलनस्य च।
स्त्रियोनः कन्यकागात्रात् मलेष्वपहृतेषु च।
यिरूशालम् नगर्य्याश्च शोधिते दूरिते सति।
५ सियोन् शैलस्य सर्व्वत्र पवित्रे तस्य संसदि।
दिवा मेघञ्च धूमञ्च रात्रावग्निञ्च स्रक्ष्यति।
तेनैवाच्छादनं सर्व्वतेजसेषु भविष्यति।
६ तदैव दूष्यरूपञ्च तच्छाया ग्रीष्मवारिणी।

झञ्झातो वृष्टितश्चैव रक्षणस्य निदानतः।
भविताच्छादनं तद्धि संश्रयश्च भविष्यति।

## ५ पञ्चमोऽध्यायः।

१ परमेश्वरस्य द्राक्षाक्षेत्रे: कथनं ८ लोभस्य दण्डः ११ भोगिनां दण्डः १८ दुष्कर्मकारिणां दण्डः २० लोकानां दण्डः २५ तेषां दण्डस्य कथनम्।

१ सांप्रतं मित्रमुद्दिश्य तस्य द्राक्षार्थं प्रति
प्रगायामि सुवेशाढ्यम् एकं प्रेमीयगीतकम्।
फलयुक्तस्य शैलस्याधित्यकायां प्रियस्य मे।
२ द्राक्षाक्षेत्रमभूदेकं स तत्र वारणीं व्यधात्।
प्रस्तरांश्च बहिष्कृत्य सुद्राक्षां पर्य्यरोपयत्।
मञ्चमुच्चं विनिर्माय कुण्डं तत्र चखान च।
द्राक्षाफलमपेक्षिष्ट पक्वाशाम्रातकं फलम्।
३ हे यिरूशालमीलोका यिहूदीयाश्च सर्व्वशः।
वच्म्यहं विनयं कृत्वा यूयं सर्व्वेऽपि मामधि।
द्राक्षाक्षेत्रं मदीयञ्चाधि कुरुध्वं विवेचनाम्।
४ द्राक्षाक्षेत्रस्य कार्य्याणि मया यादृक् कृतानि हि
तस्मादप्यधिकं कर्त्तुं शक्नोमि किमहं पुनः।
मम द्राक्षाप्रतीक्षायां पक्वाशाम्रातकं कुतः।
इदानीं गोप्तक्षेत्रं प्रति यादृक्करोति मम।

११ ये सुरापानमन्वेष्टुम् उत्तिष्ठन्ति प्रगे आ
द्राक्षारसस्य तापाच्च यावद् गाढविभावरीं।
तिष्ठन्त्युपविशन्तश्च तेषां तापो भविष्यति।
१२ आयोजयन्ति ते भोज्ये वल्लकीं नेबलन्तथा।
वंशींश्च नवलञ्चैव गोस्तनीरसमेव च।
किन्तु तैः परमेशस्य कर्म सम्मन्यते नहि।
विविच्यते न तैर्लोकैस्तस्य हस्तस्य कर्म्म च।
१३ अतएव मदीया ये लोकास्ते ऽज्ञानकारणात्
बन्दीभूय गमिष्यन्ति वस्तुमन्यत्र नाष्टति।
कुलीनमानवास्तेषां भविष्यन्ति बुभुक्षिताः।
पिपासिता भविष्यन्ति तेषां सर्व्वे पृथग्जनाः।
१४ वर्द्धयित्वा निजं कुक्षिं परलोकोऽप्रमाणतः।
स्वकीयमाननं पश्चात् परिविस्तारयिष्यति।
तस्य लोका महान्तश्च नीचाः कलहिनो जनाः
आनन्दकारिलोकाश्च तत् प्रवेक्ष्यन्ति सर्व्वशः।
१५ नीचा नता भविष्यन्ति महालोका अधोमुखाः
१६ दृष्टिर्नता भविष्यन्ति नृणां गर्व्वयुता तदा।
सैन्याध्यक्षपरेशस्तु प्रोन्नंस्यति विचारतः।
तथा पवित्र ईशस्य धर्म्मो मान्यो भविष्यति।
१७ तदानीं मेषसन्दोहा निर्व्विघ्नेन चरिष्यति।

विदेशिनो अजान् छागान् पतितासु तु भूमिषु ।
उन्नतानां मनुष्याणां करिष्यन्ति सुचारकान् ।
१८ आकर्षन्ति हि ये दुष्टमधर्म्मरूपरज्जुभिः ।
तथा पापं मनुष्या ये शकटस्थूलरज्जुभिः ।
तेषामेव मनुष्याणां सुसन्तापो भविष्यति ।
१९ स तूर्णं कुरुतां कर्म्म प्रपश्यामो वयं यथा ।
इस्रायेलधर्म्मरूपस्य कर्म्म मन्त्रणं तथा ।
समुपस्थाय संसिद्ध्येद् विजानीमो वयं यथा ।
इति तैरुच्यते तस्मात् शीघ्रं कार्य्यं करोतु सः ॥
२० अभद्रं वस्तु ये भद्रं प्रवदन्तीह मानुषाः ।
तथा भद्रमभद्रं ये प्रवदन्ति च मानुषाः ।
आलोकमन्धकारं ये तम आलोकमेव च ।
मिष्टं तिक्तञ्च जानन्ति तिक्तन्तु मिष्टमेव च ।
तेषामेव मनुष्याणां सन्तापः संभविष्यति ।
२१ ज्ञानिनः स्वस्वदृष्ट्या ये सम्भवन्तीह मानवाः ।
दर्शिनः परिणामस्य ये जनाः स्वस्वबुद्धितः ।
तेषामपि मनुष्याणां सन्तापः संभविष्यति ।
२२ गोस्तनीरसपाने ये भवन्ति पटवो नराः ।
आसादने सुरायाश्च निपुणाः सम्भवन्ति ये ।
२३ उत्कोचं संपरिगृह्य मानुषं सापराधकं ।

निरागसं प्रकुर्व्वन्ति धर्म्मच्युतञ्च धार्म्मिकम् ।
तेषामपि मनुष्याणां सन्तापः सम्भविष्यति ।
२४ जिह्वा चर्व्वति नाडानि यथा वह्निस्वरूपिणी ।
शुष्कतृणानि दह्यन्ते यथा च वह्निहेतिभिः ।
तथैव तेषां मूलञ्च भविता जीर्णकाष्ठवत् ।
उड्डीय तेषां पुष्पाणि परियास्यन्ति धूलीवत् ।
यतो हेतोः परेशो यः पृतनानां महाधिपः ।
तद्व्यवस्थां मनुष्यास्ते परिकुर्व्वन्ति तुच्छिकां ।
इस्रायेलधर्म्मरूपस्य वाक्यावज्ञाञ्च कुर्व्वते ॥
२५ अतः स्वीयमनुष्याणां विपरीतं परेशितुः ।
अमर्षस्यातिसंज्वालो निश्चितं सम्भविष्यति ।
स तेषां प्रतिकूलञ्च हस्तौ विस्तारयिष्यति ।
तथा तान् मानुषान् हत्यं स्वयं पर्य्याहनिष्यति ।
तेनैव पर्व्वताः सर्व्वे भविष्यन्ति प्रकम्पिताः ।
तेषाञ्च कुणपा मार्गे भविष्यन्ति च गूथवत् ।
तथापि तस्य कोपस्य निवृत्तिर्न भविष्यति ।
किन्तु तस्य पुन र्हस्तौ विस्तृतौ सम्भविष्यतः ।
२६ दूरदेशिजाते तेन ध्वज उत्तोलयिष्यते ।
आभूमिसीमलोकेभ्य आह्वानं परिदास्यते ।
तेनैव ते द्रुतं गत्वा समेष्यन्ति जना द्रुतम् ।

२७ पथि ते दुर्ब्बला नैव भविष्यन्ति च केपि हि।
तेषां न स्खलनं भावि तन्द्रा च न भविष्यति।
नैव तेषां मनुष्याणां निद्रा च संभविष्यति।
न च तेषां मनुष्याणां कटिबन्धो विमोक्ष्यते।
२८ न चर्म्मपादुकानाञ्च सूत्रमुक्ति भविष्यति।
तथा तेषां शरास्तीक्ष्णाः सगुणानि धनूंषि च।
भविष्यन्ति तुरङ्गानां खुरा हीरकसन्निभाः।
२९ गणिष्यन्ते रथाङ्गानि तेषान्तु घूर्णवातवत्।
भवेच्च गर्ज्जनं तेषां सिंहीगर्ज्जनसन्निभं।
यथा मृगेन्द्रयूथानां परिगर्ज्जन्ति शावकाः।
गर्ज्जन्तस्ते तथा धृत्वा पशून् नेष्यन्ति मानवाः।
३० न च शक्ष्यन्ति तान् केपि मनुष्याः परिरक्षितुं।
तस्मिन् दिने मनुष्याणां तेषाञ्च प्रतिकूलतः।
अकूपारो यथा गर्ज्जेद् गर्जिष्यन्ति तथैव ते।
तेनैव ते जनाः सर्व्वे वीक्षिष्यन्ते वसुन्धरां।
किन्तु दुःखं तमिस्रञ्च भविष्यति हि केवलम्।
आलोको घोरमेघेन भविष्यति तमोमयः॥

६ अध्यायः।

१ यिशयियस्य दर्शनं ६ कठिनलोकानां समीपं प्रति तस्य प्रेषणं ११ अवशिष्टलोकानां रक्षणम्।

१ उषियनृपतिर्यस्मिन् वर्षे मृत्युमवाप्तवान्।

तस्मिन् वर्षे समुत्तुङ्गे प्रोच्चे सिंहासने तथा।
निजं प्रभुं समासीनं परिवीक्षितवानहम्।
अभवत् परिपूर्णञ्च मन्दिरं तस्य तेजसा।
२ तदन्तिके समातिष्ठत् दूतानां सिरफांगणः।
तेषामेकैक आसीच्च षट्षट्पक्षधरस्तदा।
तेषां पक्षद्वयेनैव मुखमाच्छादयेन् निजम्।
तथा द्वाभ्याञ्च पक्षाभ्यां पादावाच्छादयेन्निजौ।
अपराभ्यान्तु पक्षाभ्यां द्वाभ्यां समुड्डयेत च।
३ तदा संभूय तैः प्रोक्तं सैन्याध्यक्षः परेश्वरः।
पवित्रस्य पवित्रस्य पवित्रस्येति नामभिः।
तथा तदीयतेजोभिः परिपूर्णा वसुन्धरा।
४ तेषामेतस्य वाक्यस्य महतः प्रोच्चशब्दतः।
मन्दिरद्वारमूलानि सकलानि चकम्पिरे।
तथैवमन्दिरं धूमैः परिपूर्णमभूत्तदा।
५ ततो मया परिप्रोक्तं विनाशं गतवानहम्।
यतोऽहमपवित्रोष्ठो ऽमेध्योष्ठैः सह वासवान्।
मदीयनयनद्वन्द्वं राजानं परिदृष्टवत्।
सर्वतः पर्य्यपश्यत् तत्सैन्याध्यक्षपरेश्वरम्॥
६ अनन्तरं सिरफ् नामा यज्ञीयवेदिमध्यतः।
ज्वलदङ्गारमादाय प्रोड्डीय मामुपागमत्।

७ ततस्तं मम तुण्डे स स्पर्शयित्वाब्रवीदिदम् ।
पश्याङ्गारस्य त्वद्वक्त्रपरिस्पर्शनतः क्षणात् ।
अधर्म्मो यस्त्वदीयः स स्वयं दूरीकृतो भवेत् ।
तथैव तावकीनं यत् पातकं तदमुच्यत ।
८ ततोऽहं कं प्रहेष्यामि को वा यास्यति मत्कृते ।
इत्येतद्भाषमाणस्य परेशस्य श्रुतं वचः ।
मया तदा परिप्रोक्तं पश्याहमस्म्युपस्थितः ।
इदानीं परमेशेन प्रेषणीयस्त्वया ह्यहम् ।
९ तेनोक्तं त्वमुपव्रज्य लोकानेतानिदं वद ।
कर्णैः श्रोष्यथ यूयं वै किन्तु यूयं न भोत्स्यथ ।
नेत्रैर्द्रक्ष्यथ यूयञ्च परिज्ञातुं न शक्ष्यथ ।
१० ते मानुषा यथा नैव परिपश्यन्ति लोचनैः ।
कर्णैर्यथा न शृण्वन्ति न बुध्यन्ते च मानसैः ।
व्यावर्त्तयन्तु चित्तानि समये तेषु कुत्रचित् ।
मन्तस्ते मनुजाः स्वस्था यथा नैव भवन्ति च ।
तथा तेषां मनुष्याणां क्रियन्ते स्थूलबुद्धयः ।
बधिरीभूतकर्णाश्च जाताश्च मुद्रिता दृशः ॥
११     अनन्तरं मया प्रोक्तं हे प्रभो परमेश्वर ।
दिनानामीदृशां भावि संख्यानं कति सोऽवदत् ।
यावत् वसतिशून्यानि पुराण्येतानि सर्व्वशः ।

तदा तस्य जनस्यास्य लोकानामपि मानसं ।
वायुना कम्पितो वन्यवृक्षकम्पे विटपी यथा ।
३ इत्यस्मादब्रवीदित्थं यिर्मियं परमेश्वरः ।
त्वं शार्य्याशूबपुत्रस्ते पुष्करिण्यास्तटोपरि ।
रजकक्षेत्रमार्गे च साक्षात् विधातुमाहसं ।
प्रगच्छतं युवामेतां कथाञ्च संश्रवय्यथः ।
इदानीं त्वं स्थिरो भूया भूत्वा च सावधानकः ।
४ धूम्रमध्याविमे उल्के एतयोरग्रभागतः ।
अर्थात् रिसीन् कुमाराच्च रिमलियस्य पुत्रतः ।
महाकोपविशिष्टाच्च मा भयं क्रियतां त्वया ।
तथा त्वं मानसे नैव भूयास्व दीनसाहसः ।
५ अरामीया इफ्रायिमो लोका रिमलियात्मजः ।
[illegible] अहितकृत्मिमामेते समकुर्व्वन् कुमन्त्रणां ।
६ आयात यिहूदादेशम् आक्रम्य क्षोभयाम तम् ।
वयं तेषाम् [illegible] विभज्य च ।
[illegible] व च ।
[illegible] म च ।
[illegible] यते ।
[illegible] आतु सुस्थिरा न भविष्यति ।
तथैव मन्त्रणा या न सिद्धिं यास्यति कुत्रचित् ।

८ दम्मेषक् नगरं स्थायेत् अरामदेशस्य मस्तकं ।
तथा रिसीन् महीपालो दम्मेषकमस्तकं यदि ।
शोमिरोण् नगरं चेत् स्यात् इफ्रयिमस्य मस्तकम् ।
तथा रिमलियः पुत्रः शोमिरोणः शिरो भवेत् ।
९ तथापि पञ्च षष्टीनां वर्षाणामेव मध्यतः ।
समुच्छिन्ना भविष्यन्ति लोका इफ्रयिमोऽखिलाः ।
नहि स्थास्यति तेषाञ्च जातिरेका कदाचन ।
किन्तु यूयं न विश्वासं मयि कुर्य्यात कर्हिचित् ।
तर्हि स्थिराः सुसंस्थातुं न शक्ष्यथ कदाचन ॥
१० आहाजे कथयामास पुनश्च परमेश्वरः ।
११ स्वं प्रभुं परमेशं त्वं चिह्नं किञ्चन प्रार्थय ।
तं प्रार्थयस्व नीचस्थे स्थाने वाप्यूर्द्ध्वसंस्थिते ।
१२ किन्त्वाहस् कथयामास संप्रार्थ्यं न खलु मया ।
परीक्षा परमेशस्य नैव कारिष्यते क्वचित् ।
१३ तेनैव स जगादेदं हे दायूद्वंशसञ्चय ।
इदानीं मानवं धत्त यूयं व्यथयतिं नृणां ।
अल्पां संमान्य संशयं निजेशस्य करोषि हि ।
१४ युष्मभ्यं परमेशेन दीयतां चिह्नमेककं ।
पश्य गर्भवती कन्या तनयं प्रसविष्यति ।
इम्मानुयेल् तदीयञ्च नामधेयं करिष्यति ।

१५ पश्चात् स साधुकार्य्याणाम् असाधूनाञ्च कर्म्मणां।
स्वीकृतास्वीकृतत्वाभ्यां ज्ञानवानभवत् स्वयम्।
दध्नश्च मधुनस्तेन भक्षणं प्रकरिष्यते।
१६ यतो देशीयराजभ्यां याभ्यां क्लेशमवाप्स्यसि।
तद्बालकस्य दुष्कर्मास्वीकारज्ञानलाभतः।
तथा तस्यैव सत्कर्मस्वीकारज्ञानलाभतः।
पूर्व्वमेव हि देशः स परित्यक्ततां प्रयास्यति॥
१७ इस्रायिलो यिहूदातः पृथग्भूतकालतः।
विपत्तिं यादृशी नैव कदाचिदपि प्राभवत्।
विपत्तिस्तादृशी तव अश्शूरस्येश्वरार्पितं।
परेशिता समानीय तुभ्यं गृहाय तवापि च।
त्वदीयपितृवंशेभ्यो निश्चितं घटयिष्यते।
१८ तदा मिस्रीयनद्याश्च शेषदेशीयमक्षिकां।
अश्शूरदेशभृङ्गञ्च प्रतिनादं स दास्यति।
१९ तेनैव ते समागत्य शून्यसंनिवेशभूमिषु।
शिलोच्चयस्य छिद्रेषु तथैव निविडे वने।
समस्तकण्टकारामाश्च करिष्यन्त्युपवेशनं।
२० तदा परात् नदीपारे क्रीताश्शूरीयभूभृता।
परकीयस्वरूपेण क्षुरेण परमेश्वरः।
उत्तमाङ्गस्य पादस्य लोम्नां क्षौरं करिष्यति।

तथा निग्यातनस्यैव मक्षूत्वां प्रकरिष्यति ।

२१ तदानीमपरस्यैव वत्समेव घटिष्यते ।

युवतीं गोवत्सीं मेषौ कश्चित् चेत् पालयेत्तदा ।

तर्हि तेषां स दुग्धेभ्य उत्पन्नं भोक्ष्यते दधि ।

२२ एवं देशस्य मध्ये ये शेषा स्थास्यन्ति केवलं ।

ते जना नवनीतानि भोक्ष्यन्ते मधूनि च ।

२३ तथा येषु च वर्षेषु मुद्रासहस्रमूल्यिकाः ।

सहस्रं परिविद्यन्ते गोस्तनीनामिका लताः ।

तस्मिन् दिने तु तत्सर्वं भावि श्याकुलकण्टकं ।

२४ मानवास्तत्र यास्यन्ति गृहीत्वा च धनुःशरौ ।

व्याप्स्यते निखिलोनीवृत् यतः श्याकुलकण्टकैः ।

२५ श्याकुलकण्टकाद् यत्र भीति र्नासीत् कदाचन ।

कुद्दालैः खनितास्ते च सकला उपपर्व्वताः ।

वृषाणां चरणं भावि मेषाणां दलनन्तथा ॥

८ अष्टमोऽध्यायः ।

१ महेरोषबोर्दीरबाबेशो भविष्यद् दृष्टः ५ यिहूदाया भविष्यत् दण्डः ९ दण्डस्यानिवार्य्यत्वं ११ साधूनां सान्त्वनायाः कथा १९ देवार्थिनां दुःखं ।

१ गृहीत्वा पृथुपात्रं त्वं विशालतचो ऽन्नतस्तथा ।

तस्य मध्ये कथामेतां लिख त्वं च यथाक्रमं ।

महेर्शालहाश्बसयोत् लोक्यतां त्वरितं तथा ।

तथा द्रुतस्य वस्तूनि लोठितानि स्थलस्य च ।

इत्येतत् परमेशेन पर्य्यगादि च मां प्रति ।

२ तदाहञ्च ममाचार्थं विश्वासपात्रिणौ मया ।

उरियथाजकश्चैव यिविरिखियुतं तथा ।

सिखरियं प्रति साक्ष्ये समीपं प्रथमाक्षयम् ।

३ पश्चान्मदीयभार्य्या या मया सा समुपागता ।

तदानीं गर्भिणी भूत्वा संप्रासोष्ट ममात्मजम् ।

तदा कथितवान् मह्यं इदं वाक्यं परेश्वरः ।

तस्य नाम महेर्शालल् हाशबस् त्वं कुरु साम्प्रतम् ।

४ यतो हे मे पितर्हे मे मातरेतत् प्रभाषणं ।

बालेनोच्चारितं शीघ्रं शिवनस्य च पूर्व्वतः ।

दम्मेषकोषधनश्चैव शोमिरोणस्य लोठनं ।

अशूरीयस्य भूपस्य नेष्यते वायतोयतः ॥

५ ततः परं पुनर्मां स उक्तवान् परमेश्वरः ।

६ यस्मा लोका इमे सर्व्वे शीलोहो मन्दगामि यत् ।

स्रोतस्तत् परिसंत्यज्य रिसीनं रिमलियस्य च ।

तनयं प्रति कुर्व्वन्ति परमानन्दमोद्भवं ।

७ अतो महाबलश्चैव महाजवसमन्वितम् ।

फरात्सरित्पयोरूपम् अशूरीयधरापतिं ।

सैन्यानि च तदीयानि तानेव मानुषानधि ।

आनेष्यति परेशः सा स्त्रोता आप्लवति बालवैः ।
सर्व्वासामेव सीमानामुपर्य्युपरि यास्यति ।
८ प्रोच्छलिता च छन्ना च यिहूदामध्यदेशतः ।
परिगत्य गलं देशं यावत् उत्यास्यति सा सा ।
इम्मानूयेल् अलं तेषां पक्षाः पक्षरूपकं ।
त्वदीयकृत्स्नदेशस्य विस्तारो व्याप्स्यते स्वयं ॥
९ हे सर्व्वमानवा यूयं संविभीत हतत्कला: ।
हे दूरदेशिनो लोकाश्च चित्तं निधत्त च ।
कुरुध्वं साध्वसं यूयं कृत्वा च कटिबन्धनम् ।
साध्वसं संविधद्ध्वं विधाय कटिबन्धनं ।
१० युष्माभि र्मन्त्रणा कार्य्या भविता निष्फला तु सा ।
तथैव मन्त्रणा कार्य्या किन्तु सा नहि सेत्स्यति ।
यतः स ईश्वरो ऽस्माभिः सहितः परिविद्यते ॥
११ ततःपरं परेशेन समादाथि करो मम ।
यथा च तन्मनुष्याणां वर्त्मना न व्रजाम्यहम् ।
उपादिशत् स एतस्मिन् एतद्वाक्यमभाषत ।
१२ एते तु मानुषाः सर्व्वे राजद्रोहं वदन्ति यत् ।
न तं यूयं प्रभाषध्वं राजद्रोहं कदाचन ।
तेषां भीत्या न भेतव्यं शङ्कनीयञ्च न कचित् ।
१३ पवित्रयति मन्यध्वं सेनाध्यक्षः परेश्वरः ।

सएव संश्रयो भावी युष्माकं भयशङ्कयोः ।
१४ पवित्र आश्रयश्चापि स युष्माकं भविष्यति ।
किन्तु स्खलनपाषाणो बाधकः प्रस्तरस्तथा ।
सएव भविता नूनम् इस्रायेलीयवंशयोः ।
प्रति संभवितोन्माथो यिरूशालम् निवासिनः ।
तथा यन्त्रस्वरूपश्च भविष्यति स तान् प्रति ।
१५ तत्र तेषां मनुष्याणां स्खलन्तो बहवो जनाः ।
अवश्यं संपतिष्यन्ति गमिष्यन्ति च भग्नताम् ।
तथोन्माथेषु संबद्धा धारिष्यन्ते च मानुषाः ।
१६ एतत्साक्षिवाक्यस्य बन्धनं त्वं विधेहि च ।
मत्शिष्यव्यूहमध्ये तामाज्ञां मुद्राङ्कितां कुरु ।
१७ पराङ्मुखः परेशो यो याकूबोऽभिजनं प्रति ।
तत्कृते पद्वीक्ष्याहं निरीक्षिष्ये हि साम्प्रतम् ।
तथा तस्यैव कारिष्ये मया तु संप्रतीक्षणम् ।
१८ पश्याहमीश्वरेणैव दत्ताः सन्ततयो मम ।
सैन्याध्यक्षपरेशेन सियोनक्ष्माभृन्निवासिना ।
इस्रायेलीयचिह्नानि चित्राणि लक्षणानि ते ॥
१९ गुप्तिमायाविनो ये च लोकाः कर्णे वदन्ति ये ।
तेषां समीपे लोकानां यूयमन्विच्छताधुना ।
इति वाक्ये मनुष्यैस्तै र्युष्मभ्यं कथिते सति ।

नूत किं स्वर्गसिंहासने जना ईश्वरसन्निधौ ।
जीवितानां कृते किं ते सफला एव मानवाः ।
हता ये मनुजा येषामन्वेष्यन्ति समीपतः ।
२० व्यवस्थायां साक्ष्यवाक्ये स्तवनां हि ते जनाः ।
यथैतदनुसारेण कथयन्ति न ते नराः ।
तर्हि तेषां मनुष्याणां मध्ये दीप्तिर्न विद्यते ।
२१ किन्तु देशस्य मध्येन परिभ्रम्य जना ध्रुवम् ।
दुःखिता क्षुधिताश्चैव भविष्यन्ति सुनिश्चितं ।
तथा बुभुक्षिता भूत्वा प्रोक्तवाक्यं निजं निजम् ।
राजानमभिशप्स्यन्ते स्वं स्वमीशञ्च ते नराः ।
२२ एवमूर्द्ध्वमधोभूमिं निरीक्षिष्यन्ति ते नराः ।
किन्तु केवलदुःखञ्च तमिस्रञ्च भविष्यति ।
क्लेशाभयङ्करत्वञ्च नृणां तेषां भविष्यति ।
भवितारो मनुष्यास्ते ऽभिमानेन प्रताडिताः ॥

## ९ नवमोऽध्यायः ।

१ विपत्काले खीष्टस्य जनिः कर्म्माभि मानवानां दुःखानां वर्णनं ८ इत्यादितो भविष्यद्वचः ११ तेषां याजनम् उपद्रा- विनां हने इत्यत्र ।

१ आसीत् जनपदः पूर्व्वम् अतीवक्लवांस्तु यः ।
तत्र किञ्चित् पुनर्वारं संस्थास्यति तमो नहि ।
यथा पुरा सिबूलूनं नप्तालिमवमानितम् ।

तथैव शेषकाले च जलधेः सन्निधौ स्थिते ।
यर्द्दनाख्यनदीतीरे स्थितानां परदेशिनाम् ।
स गालीलाख्यदेशस्य प्रोत्कर्षं संविधास्यति ।
२ तेनैव मानवाः ये ये पर्य्यभ्राम्यन् तमिस्रके ।
ते जने वृहदालोकः परिदर्शिष्यते तदा ।
अवसन् ये जना देशे मृत्युच्छायास्वरूपके ।
तेषामुपरि लोकानाम् आलोकः संप्रकाशिता ।
३ ऐधयित्वा च देशं त्वं तान् समानन्दयिष्यसि ।
तेनैव त्वत्समक्षं तु शस्यकर्त्तनकालवत् ।
ह्लादिष्यन्ते मनुष्यास्ते नन्दिष्यन्ति च ते तथा ।
यथा लोठितवस्तूनां विभागसमये भवेत् ।
४ यतस्त्वं मिदियानीयजयस्य दिवसे यथा ।
तथा तस्य युगं भारं स्कन्धस्य वद्धमेव च ।
तस्योपद्रवकर्त्तॄणां दण्डमप्यवभंक्ष्यसि ।
५ एवं तुमुलसंग्रामे सज्जीभूता च वाहिनी ।
तस्याः सज्जा च रक्तेषु लुठितं वसनं तथा ।
वैश्वानरस्य काष्ठानि भूत्वा दग्धीभविष्यतः ।
६ एवमस्मत्कृते कश्चित् बालकः संजनिष्यते ।
अस्मभ्यं तनयैकश्च परिदायिष्यते तदा ।
तस्य स्कन्धे स्थितस्यैवाधिपत्यम् अर्पयिष्यते

तन्नामधेयमाश्चर्य्यं मन्त्री च बलवांस्तथा ।
ईश्वरो ऽनन्तकालीनः पिता चापि भविष्यति ।
तथैव शान्तिरूपस्य भूपतिश्च भविष्यति ।
७ नास्ति तस्याधिपत्यस्य शुभत्वस्य च शेषता ।
सिंहासनस्य दायूदो राजत्वस्य च स प्रभुः ।
भूत्वा विचारतो न्यायाद् इदानीमपि सर्व्वदा ।
करिष्यति सत्त्वेन स्थापनञ्च निरूपणम् ।
अपरञ्च परेशो यः सैन्यानामधिपश्च यः ।
तदीयोद्योगतः सर्व्वम् एतत् सिद्धं भविष्यति ॥
८ प्रातिकूल्यादिमां वार्त्तां याकूबः प्राहिणोत् प्रभुः
इस्रायेलः समीपञ्च सा शीघ्रं समुपस्थिता ।
९ एते च सकला लोका इफ्रयिम्शोमिरोणयोः ।
निवासिनः स्वगर्व्वेण गर्व्विताः प्रावदन् इति ।
१० इष्टकानि तु सर्व्वाणि पतितानीति निश्चितम् ।
किन्तु तक्षितपाषाणै र्निर्म्मा [illegible] ।
उडुम्बरद्रुमो ऽछेदि [illegible] ।
किन्त्वेरस् शाखिनं [illegible] वयं ।
सर्व्वं ते प्रभुणा इत्थं परिज्ञास्यन्ति निश्चितम् ।
११ यतो नाम्ना रिषीनो ये वैरिणस्तान् परेश्वरः ।
समुत्थापयिता सर्व्वं तस्यैव प्रतिकूलतः ।

तद्दीपान् सकलान् अमून् च मुसल्मीकरिष्यति ।
तेनैव पूर्वदिक्स्थंशो यांश्चमलेररातिभिः ।
पश्चिमस्थैः पिलेष्टीयैरिस्रायेल् संचर्ष्यते ।
१२ इत्थं सत्यपि नो तस्य कोपशान्तिर्भविष्यति ।
किन्तु तद्दीपवर्त्तौ दौ सुविस्तीर्णौ भविष्यतः ॥
१३ व्याघोटिष्यन्ति ये लोकाः प्रहारकारिसन्निधौ ।
सैन्याधिपपरेशस्य मार्गे विचलन्ति मानवाः ।
अतएवैकदा तूर्यं संछेत्स्यति परेश्वरः ।
इस्रायेलः शिरः पुच्छं शाखाश्च पल्लवानि च ।
१५ दृष्ट्वा मान्याश्च ये लोकास्तएव तस्य मस्तकं ।
अतथ्यशिक्षकास्तस्य लाङ्गूलं भाविवादिनः ।
१६ यत एषां मनुष्याणां ये लोका मार्गदर्शकाः ।
तएव तान् मनुष्यान् हि भ्रमयन्ति पुनः पुनः ।
यतस्तेषां मनुष्याणां भोजके यात्रकापि ते ।
गमिष्यन्ति विनाशं ते मानवाः सकला ध्रुवं ।
१७ तेषां युवजने नैवानन्दिष्यति परेश्वरः ।
पितृहीनान् विधूनन्नैव विधवाश्च दयिष्यते ।
यतस्ते निखिला दुष्टाः कुकर्मकारिणश्च ते ।
तथा तेषाञ्च वक्त्राणि व्यर्थवाक्यानि सर्वतः ।
इत्थं भूतेऽपि नो तस्य कोपशान्तिर्भविष्यति ।

किन्तु हस्तौ तदीयौ द्वौ सुविस्तीर्णौ भविष्यतः ॥

१८ ज्वलन् धक्ष्यति पापाग्निः शृगालकोलिकण्टके ।
एवं तन् निविडारण्ये स्वयमेव लगिष्यति ।
तेनैव मेघवत् पश्चात् धूमश्चैवोद्गमिष्यति ।

१९ सैन्याध्यक्षपरेशस्य क्रोधो देशं प्रधक्ष्यति ।
तथा लोका भविष्यन्ति वह्निना दग्धकाष्ठवत् ।
न च कोऽपि दयिष्यन्ते भ्रातरञ्च निजं निजं ।

२० हत्वापि दक्षिणे हस्तैः स्थास्यन्ति क्षुधिता हि ते ।
वामहस्ते ग्रसित्वापि नैव तर्प्स्यन्ति ते जनाः ।
सर्व्वो जनः स्वहस्तानां मांसानि परिभोक्ष्यते ।

२१ इफ्रयिम् मिनशिश्चैव ग्रसिष्यति परस्परम् ।
यिहूदाप्रतिकूलं तावेकमन्त्रौ भविष्यतः ।
इत्थं भूतेऽपि नो तस्य क्रोधशान्ति र्भविष्यति ।
किन्तु तस्य पुनर्हस्तो विस्तीर्णत्वं प्रयास्यतः ॥

## १० दशमोऽध्यायः ।

१ अन्यायकारिणां दण्डनं ५ अभिमान्यशूरनरपतेरागमकथनं १२ तस्य विनाशः २० इस्रायेलो ऽवशिष्टानां लोकानां रक्षणं २८ अशूरराजस्य सैन्यानामागमनवर्णनं ३३ तस्य विनाशकथनञ्च ।

१ अन्यायकरणार्थञ्च दरिद्रान् मनुजान् प्रति ।
अपक्रोष्टुं यथार्थञ्च दुर्गतानां नृणां मम ।

२ अपहर्तुञ्च वस्तूनि विधवानान्तु योषिताम्।
बालकानाममातानां द्रव्यं चोरयितुं तथा।
ये व्यवस्थाकृतो ऽन्यायाद् व्यवस्थां स्थापयन्ति हि।
उपद्रवव्यवस्थाञ्च निरूपयन्ति ये नराः।
तेषामिह मनुष्याणां सन्तापः संभविष्यति।
३ दण्डस्य करणे काले युष्माभिः किं करिष्यते।
दूरादागतनाशस्य दिने वा किं करिष्यते।
करिष्यते च रक्षार्थं कस्यान्तिकपलायनं।
ऐश्वर्य्याणि च युष्माकं कुत्र संस्थापयिष्यथ।
४ यूयं बद्धनृणां मध्ये निपतिष्यथ मां विना।
हतानाञ्च मनुष्याणां मध्यतो निपतिष्यथ।
इत्थं भूतेपि नो तस्य क्रोधः शान्तिं गमिष्यति।
किन्तु तदीयहस्तौ दौ विस्तारं यास्यतः पुनः॥
५ यो ऽश्शूरो मम कोपस्य दण्डरूपः स जायते।
तदीयहस्तयो र्यष्टि र्मत्कोपरूपयष्टिका।
६ लोठितं संग्रहीतुञ्च नेतुमर्थञ्च लोठितं।
मार्गमध्ये मनुष्यांश्च दलयितुञ्च पङ्कवत्।
तमहं प्रेषयिष्यामि विरुद्धं कल्पनाकृतां।
आदेक्ष्यामि स्वकोपस्य पात्रस्य च विरुद्धतः।
७ अभिप्रायो न तस्यार्थं न च तस्य मनोगतम्।

किन्तु नाशयितुं लोकान् नानादेशसमुद्भवान् ।
तदीयमनसो वाञ्छा प्रोच्छिन्नान् कर्त्तुमेव तान् ।
८ यतः स वक्ति मेऽध्यक्षा राजानो नहि सर्व्वशः ।
९ तथा कर्किमिशः कल्नी समानो न भवेत् किमु ।
अर्पदस्य हमात् किं वा समानो नहि जायते ।
दम्मेषक् च भवेद् यादृक् शोमिरोण् किं न तादृशं ।
१० शोमिरोणस्य मूर्त्तिभ्यो मर्त्तिभ्यो यिरूशालमः ।
येषु देशेषु विद्यन्ते तच्छितोत्तममूर्त्तयः ।
ते सर्व्वे मोष्टतो जाता मदीयकरसंगताः ।
११ शोमिरोणश्च तन्मूर्त्ती यथाहं हतवान् पुरा ।
तथा किं न करिष्यामि मूर्त्तीश्च यिरूशालमं ॥
१२ यिरूशालम्सियोनद्रौ प्रति परिष्ठद्य तु ।
सिद्धौ समभिजातायां सर्व्वेषामेव कर्म्मणां ।
अहम् अशूरराजस्य साहङ्कारस्य चेतसः ।
कर्म्मणः प्रांशुदृष्टेश्च गर्व्वाया निमित्ततः ।
तस्याप्यपि च दास्यामि योग्यां शास्तिमहं ध्रुवं ।
१३ यतो भाष्येत तेनेत्थं परिणामप्रदर्शकम् ।
स्वीयबाहोर्बलेनापि ज्ञानात् कार्य्यमसाधयम् ।
मनुष्याणामहं सीमां विप्रकृष्टां विधाय च ।
अलोठयमहं तेषां सञ्चितानि धनानि हि ।

वीरवद्वासिलोकांश्च न्यक्पातं प्रतिनीतवान्।
१४ नीडवत् वरवित्तानि समायातानि मत्करं।
संग्टह्णाति यथा डिम्बं परित्यक्तमहं तथा।
देशानां सकलानाञ्च संघहं कृतवांस्तथा।
तेनैव कोपि नो पक्षौ विस्तृतौ कृतवान् किल।
अथवा चञ्चुविस्तारं रवञ्च कृतवान् नहि।
१५ छेदकस्य विरुद्धं किं कुठारो गर्व्वितुं क्षमः।
करपत्रस्य किं श्रेष्ठं स्वं वेत्ति करपत्त्रिणः।
दण्डमुत्तोलयेद्द् यस्तं दण्डः किं चालयिष्यति।
यष्टिश्च किं स्वकर्त्तारं समुत्थापयितुं क्षमः।
१६ अतस्तत्स्थूलकायानां मनुष्याणां हि मध्यतः।
प्रभुसैन्याधिपेनैव कृशता प्रेषयिष्यते।
तथा तस्य प्रतापस्याधस्तादेव प्रभुस्तु सः।
ज्वालयिष्यति वह्निञ्च दग्धकारिकृतामवत्।
१७ इस्रायेलीयज्योतिश्च वह्निरूपो भविष्यति।
तथा धर्म्ममयस्तस्य शिखारूपो भविष्यति।
स एकस्मिन् दिने तस्य कोषिश्च कण्टकानि च।
सर्व्वाणि वह्निना दग्ध्वा विनाशं गमयिष्यति।
१८ तस्योद्यानस्य तथैव सौन्दर्य्यं तद्वनस्य च।
एकदा सर्व्वतो भावाद् विनाशं गमयिष्यति।

स तेन क्षयरोगीव क्षयत्वं परियास्यति ।

१९ तत्काननवृक्षाणाम् अल्पता च भविष्यति ।

तेनैव गणयित्वा तान् लेखिष्यति च बालकः ॥

२० इस्रायेलो ऽवशिष्टा ये मानुषा स्तत्कालतः ।

याकुबो वंशसम्भूता मनुष्याश्च पलायिताः ।

न प्रत्याशां करिष्यन्ति स्वाघातिमानुषान् प्रति ।

किन्त्वीस्रायेल् मनुष्याणां यस्तु धर्म्ममयः प्रभुः ।

तत्परेशे हि सत्येन प्रत्याशा तैः करिष्यते ।

२१ अवशिष्टाः कियल्लोका अर्थात् याकुबवंशजाः ।

अवशिष्टाः कियल्लोका यस्य सर्व्वाश्च शक्तयः ।

तमीश्वरं समुद्दिश्य व्यावर्त्तिष्यन्ति सर्व्वशः ।

२२ इस्रायेल् तव लोकास्तु सामुद्रसिकता इव ।

संख्यां प्राप्यापि तेषान्तु शेषीभूताः कियज्जनाः ।

पुनरावर्त्तनं कृत्वागमिष्यन्ति स्वनीश्वरं ।

न्यायपूर्णमिदं कर्म्म संसेत्स्यति निरूपितं ।

२३ सैन्याध्यक्षपरेशेन योऽक्षिर्न्तिः संनिरूपिता ।

तां स सर्व्वेषु देशेषु सिद्धतां गमयिष्यति ॥

२४ ब्रवीति वाक्यमेतत् स सैन्याध्यक्षः परेश्वरः ।

हे मे लोक सियोन् वासिन् अशूरो मा भयं कुरु ।

सिसरभिमतात् स त्वां यष्ट्या सन्ताडयिष्यति ।

सत्यं त्वद्विपरीतं स यष्टिमुत्थापयिष्यति।
२५ किन्त्वल्पकालतः पश्चात् मम क्रुद् कोपएव च।
तदीये संविनाशे हि सफलत्वं गमिष्यतः।
२६ ओरेव् शैले मिदीयानः कषाघातो ऽभवच्च यः।
उत्थापितश्च यो दण्डः सागरे मिस्रियोपरि।
सैन्याध्यक्षः परेशो यः स तस्य प्रतिकूलतः।
तथैव तादृशं दण्डं ध्रुवमुत्तोलयिष्यति।
२७ तदा ते स्कन्धतस्तस्य भार उत्तारयिष्यते।
त्वदीयस्कन्धतस्तस्य युगं दूरीकरिष्यते।
अभिषेकनिमित्तेन युगभङ्गो भविष्यति॥
२८ अयं स गतवान् तस्मात् स मिग्रोण उपस्थितः।
२९ तथा स्वकीयवस्तूनि स्थापयित्वा तु मिक्मसे।
घट्टं त्यक्त्वा स आगत्य गेबाते ऽयापयत् निशाम्।
प्रकम्पितोऽभवत् रामत् शौल्गिबिया पलायिता।
३० गल्लीमकन्यके प्रोच्चैः शब्दं कुरु स्वकैः स्वरैः।
हे लयिश त्वया तस्य शब्दः परिनिशम्यताम्।
हे अनाथोत् त्वया तस्मा उत्तरं प्रतिदीयतां।
३१ मद्मेना समुपागच्छत् गेबीम्संस्थाः पलायिताः।
३२ तथापि सो ऽद्य शैलस्य नोबे वासं करिष्यति।
ततः सियोनगिरेः पुत्र्याः फलतो यिरूशालमः।

गिरेरपि विरुद्धं स स्वावुन्नेतयिष्यति ॥

२३ पश्य सैन्याधिपो यस्तु स एव परमेश्वर: ।
महाभयङ्करत्वेन शाखाभङ्गं करिष्यति ।
तेनैव प्रोच्चवृक्षो य: स छिन्नत्वं गमिष्यति ।
अत्युन्नतस्य यो वृक्ष: स नतत्वं गमिष्यति ।

२४ स लौहेन वनस्थान् प्रतिच्छेत्स्यति सत्वरं ।
तत्पराक्रान्तहस्ताभ्यां लिवानोन् पातयिष्यते ॥

११ एकादशोऽध्याय: ।

१ ख्रीष्टीयराजत्वस्य निर्णय: ६ तदीयं फलं १० अन्यलोकानां आयनं यिहूदीयानां रक्षणञ्च ।

१ यिशयवृक्षपतो मूलात् पल्लवो निर्गमिष्यति ।
तन्मूलान् निर्गतो य: स पल्लवश्च फलिष्यति ।

२ अपरञ्च परेशात्मा ज्ञानबुद्धिप्रदायक: ।
मन्त्रणादायकश्चात्मा पराक्रमप्रदायक: ।
परेशविषयं ज्ञानम् आत्मा च भयरूपक: ।
तस्योपरि समाविष्टो भविष्यति सुनिश्चितं ।

३ परेशस्तु भयात् सोऽपि भविष्यति विवेचक: ।
चक्षुर्दृष्टानुरूपं स विचारं न करिष्यति ।
कर्णश्रवणरूपञ्च विचारं न करिष्यति ।

४ किन्तु दीनमनुष्याणां सुविचारं करिष्यति ।

तथा धर्म्मिसंस्थानां नम्राणां हि नृणां कृते ।
सुयथार्थविचारञ्च स निष्पत्तिं करिष्यति ।
दण्डाज्ञया स्वतुण्डस्य पृथिवीं नाशयिष्यति ।
प्रश्वासेन स्ववक्त्रस्य पापिसंघं हनिष्यति ।
५ अपरं धर्म्म एवास्य कटिबन्धो भविष्यति ।
तथा विश्वास्यता तस्य कटिबन्धो भविष्यति ॥
६ करिष्यति वृको वासं मेषवत्सैः समं तदा ।
चित्रव्याघ्रस्तु छागेन सहितः शयिष्यति ।
वत्सः पुष्टपशुश्चापि सिंहपोतेन यास्यति ।
तथैव क्षुद्रबालस्तु तान् गृहीत्वा नयिष्यति ।
७ सौरभेयी च भल्लूकी सहैकत्र चरिष्यति ।
तेषाञ्च सर्व्वशो वत्स एकस्थाने शयिष्यति ।
सिंहश्च वृषवत् क्षिप्तां नाडीं हि परिभोक्ष्यति ।
८ खेलिष्यति तदा बालश्चाक्षिगर्त्ते स्तनन्धयः ।
येन स्तन्यं परित्यक्तं तेनैव बालकेन तु ।
भुजङ्गमस्य कृष्णस्य वासे हस्तः प्रदास्यते ।
९ मदीये पर्व्वते पूते कोऽपि कुत्रापि च स्थले ।
हिंसनं वा विनाशञ्च नहि क्वापि करिष्यति ।
यतो जलनिधिस्तोयैः परिपूर्णो यथास्ति हि ।
तथा परेश्वरज्ञानैः पृथ्वी पूर्णा भविष्यति ॥

१० यिशयस्य तदा मूलं पताका भवितुं नृणां ।
उत्तोलयिष्यते प्रोच्चैः सर्व्वैरन्विष्यते च सा ।
सम्बहिमा ततस्तेन भविता दत्त आश्रयः ।
११ तत्काले ऽश्शूर्मिसर्पथ्रोष्कूशेलम् शिनियार्हमात्।
पश्चिमाश्चोद्धृतो लोकान् आनेतुं स्वावशिष्टकान्।
द्वितीयवारकं हस्तौ विस्तृतौ प्रकरिष्यति ।
१२ भिन्नदेशीयलोकेभ्यो ध्वजं संपरितोल्य च ।
पृथिव्या याश्चतस्रस्तु सीमास्ताभ्यएव सः ।
इस्रायेलताडितान् लोकान् सकलान् संग्रहीष्यति।
यिहूदाया विकीर्णा ये नरास्तान् संग्रहीष्यति ।
१३ इफ्रयिमस्य देर्व्वा विनाशत्वं गमिष्यति ।
यिहूदाया रिपुत्वं यत् तत् भग्नत्वं प्रयास्यति ।
यिहूदाम् इफ्रयिम् नैव पुनरीर्षिष्यति कचित् ।
यिहूदा इफ्रयीमं न प्रति वैरं करिष्यति ।
१४ किन्तूभौ पश्चिमं देशं पिलेष्टीयं क्रमिष्यतः ।
पूर्व्वदेशीयवस्तूनि मिलित्वा लोठयिष्यतः ।
एवं मोयाब् इदोम् देशौ तयोर्हस्तान् गमिष्यतः ।
यहीष्यन्ति तयोराज्ञाम् अम्मोनो वंशसम्भवाः ।
१५ तथा मिस्रीयनीराब्धेः प्रचोतो रसनोपमम् ।
जिह्वाखातं तु मिस्राब्धेः परेशः शोषयिष्यति ।

नदीं फरातमुद्दिश्य प्रबलेन नभस्वता ।
स स्वकीयौ तु यौ हस्तौ तौ समुत्तोलयिष्यति ।
सप्तस्रोतस्वतीभिश्च स हि तां संविभक्ष्यति ।
तथा तान् शुष्कपादैश्च तत्पारं गमयिष्यति ।
१६ एवं मिसरतो देशात् निर्यातसमये यथा ।
इस्रायेलीयलोकानाम् अयनं संस्थितं पुरा ।
अश्शूर् देशे ऽवशिष्टानां मनुष्याणाञ्च तस्य हि ।
निमित्तं तादृशञ्चैकं राजवर्त्म भविष्यति ॥

## १२ द्वादशोऽध्यायः ।

१ रक्षायै परमेश्वरस्य प्रशंसनम् ।

१ वदिष्यसि तदानीं त्वं वाक्यं हे परमेश्वर ।
वदामि त्वामहं धन्यं मह्यं त्वं क्रुद्धवान् यदि ।
तथापि तव कोपो हि मत्तो व्याघुटितो ऽधुना ।
तथा मां शान्तिसंयुक्तं त्वमेव विदधासि च ।
२ परमेश्वरो मदीयोऽस्ति परित्राणस्वरूपकः ।
विश्वसिष्याम्यहं तस्मिन् भेष्यामि न कदाचन ।
यतो याः परमेशो मे बलञ्च गीतरूपकः ।
सोऽपि मदीयसंत्राणस्वरूपो ह्यभवत् किल ।
३ त्राणप्रस्रवणात् यूयमम्बु सन्तोलयिष्यथ ।
४ वदिष्यथ तदा यूयं धन्यं ब्रूत परेश्वरम् ।

तथा तन्नामधेये हि विधत्त च निवेदनं ।
तस्याश्चर्य्यक्रियाः सर्व्वा विज्ञापयत मानुषान् ।
प्रकाशयत तन्नाम कीदृङ् महिमसंयुतम् ।
५ परमेश्वरमुद्दिश्य गीतञ्च परिगायत ।
यतः स परमाश्चर्य्यं बहु कर्म्माकरोत् पुरा ।
तस्य तत् सकलं लोके सदा परिप्रकाश्यते ।
६ हे सियोन्वासिनि प्रोच्चैस्त्वमानन्दध्वनिं कुरु ।
इस्रायेल् धर्म्मरूपस्ते मध्ये स्थात् महिमान्वितः ॥

## १३ त्रयोदशोऽध्यायः ।

१ अधि बाबिलं भविष्यद्वाक्य निर्णयः ६ लोकानां दुःखं १० बाबिलः सर्व्वविनाशश्च ।

१ बाबिल् पुरमधि द्रष्टुरामोषस्तनयस्य हि ।
यिशयियाभिधानस्य भविष्यद्वचनन्त्विदं ॥
२ प्रविशन्ते जनैः सर्व्वै द्वारमधिपते यथा ।
तदर्थं ध्वजमुत्तोल्य गिराबुच्चे शिलोच्चये ।
हस्तेन कुरु सङ्केतं त्वमुच्चैश्च ध्वनिं कुरु ।
३ अहं निजमनोनीतान् बलसंयुतयोधिनः ।
मया दत्तेन मानेन श्लाघाह्लादसमन्वितान् ।
मामकीनममर्षं हि प्रकाशयितुमादिशम् ।
४ महानगरजस्येव जायतेऽद्रौ कलारवः ।

प्रभृतनीर्ष्टानस्थानां मनुष्याणामनेकशः ।
एकत्र संग्टहीतानां ध्वनिर्भवति कलोरवः ।
सैन्याधिपपरेशेन योद्धुं संग्टह्यते बलं ।
५ सर्व्वदेशान् समुच्छेत्तुं प्रतिवान् परमेशितुः ।
अस्त्राणि तानि संग्टह्य दूराद्यान्ति देशतः ।
आकाशस्यान्तभागाच्च समागच्छन्ति सर्व्वशः ॥
६ हे लोकसकला यूयं क्रन्दनं कुरुताधुना ।
यतस्य परमेशस्य दिवसः समुपस्थितः ।
सर्व्वशक्तिमतः सोपि समायाता लयो यथा ।
७ तेनैव सर्व्वलोकानां भाविनो दुर्ब्बलाः कराः ।
तथा सर्व्वमनुष्याणां हृदयं द्रवमेष्यति ।
८ सर्व्वे भीताश्च व्यथिता भविष्यन्ति सयातनाः ।
वेदनार्त्ता भविष्यन्ति योषितः प्रसवे यथा ।
तेषामेकोऽनस्थान्यम् द्रक्ष्यत्याश्चर्य्यरूपकं ।
तद्वास्यानि भविष्यन्ति यथा हुतभुजः शिखा ।
९ पश्य देशं समां भूमिं कर्त्तुं पारेश्वरं दिनं ।
दारुणं समुपायाति तज्जयलत्कोपसंयुतं ।
स एव पापिनो लोकान् तन्मध्ये संहरिष्यति ।
१० तस्मिन् काले नभः संस्था दीप्यमाना नहि तारकाः ।
नहि दीप्तिं करिष्यन्ति नयनाणि च सर्व्वशः ।

निस्तेजो भविता सूर्य्यः स्वकीयाच्च विनिर्गमात् ।
चन्द्रमाश्च निजं तेजः प्रकाशं न करिष्यति ।
११ अहन्तु जगते पापात् तथाधर्म्मस्य कारणात् ।
सर्व्वपातकिलोकेभ्यः शास्तिं दास्यामि सर्व्वथा ।
लोप्स्यामि गर्व्विणां गर्व्वं दम्भञ्च भीतिदायिनां ।
१२ अहं लोकं करिष्यामि सूक्ष्माच्च सुवर्णतः ।
अर्थादोफिर्सुवर्णाच्च मूल्ययिष्यामि मानुषं ।
१३ सैन्याध्यक्षपरेश्चीयक्रुधस्तज्ज्वलतो दृषः ।
दिवसे कम्पवद्भावि विहायोमण्डलन्त्विदं ।
स्थानान्तरीकृता चैव भविता पृथिवी तदा ।
१४ तेनावशिष्टलोकाश्च यथापसारिता मृगाः ।
भविष्यन्ति यथा मेषा विकीर्णत्वं गतास्तथा ।
विलोक्ष्यते तदैकैकः स्वदेशीयजनान् प्रति ।
तथा स्वकीयदेशाय करिष्यति पलायनं ।
१५ ते तु विद्धा भविष्यन्ति धारिष्यन्ते हि ये जनाः ।
असिप्रहारसम्पाता भविष्यन्ति हता नराः ।
१६ आस्फालिता भविष्यन्ति तेषां साचात् स्वबालकाः ।
तद्गृहं लोठितं भावि योषितश्च बलात् हताः ॥
१७ पश्च रूप्यं प्रकुर्व्वन्ति तुच्छं ये ये च मानुषाः ।
नैव गच्छन्ति सन्तोषं सुवर्णे ये च मानुषाः ।

इदुम्यादीयलोका ये विद्यन्ते तानहं ध्रुवं।
उत्थापयिष्यामि नृणां तेषामेव विरुद्धतः।
१८ तेषां यूनो धनुर्व्वाणै र्निहनिष्यन्ति ते नराः।
अपि गर्भस्य सन्ताने करिष्यन्ति न ते दयां।
तेषां चक्षूंषि बालेषु यास्यन्ति स्नेहशून्यतां।
१९ चूडा भवति सर्व्वेषां देशानां बाबिलं पुरं।
तथा कसदीयलोकानां महिम्नो भूषणं भवेत्।
तदीश्वरस्य हस्ताभ्यां समुच्छिन्नं भविष्यति।
अमोरानगरं यद्वत् सिदोमस्य पुरं यथा।
न भविष्यति तन्मध्ये वसतिर्हि कदाचन।
२० पुरुषानुक्रमं यावत् न तत्र कोपि वत्स्यति।
अरबीयस्य नो तत्र शिविरं स्थापयिष्यति।
मेषगेहं करिष्यन्ति न तत्र मेषपालकाः।
२१ किन्तु तत्र निवत्स्यन्ति पशवो वन्यसंभवाः।
चीत्कारिपेचकानान्तु ग्टहैस्तत् पूर्त्तिमेष्यति।
उष्ट्राः खगास्य वत्स्यन्ति वन्यच्छागस्य नर्त्स्यति।
२२ तेषामट्टालिकायान्तु शंगर्जिष्यन्ति जम्बुकाः।
प्रासादे नृपतीनान्तु निवत्स्यन्ति पृदाकवः।
शीघ्रमेष्यति तत्कालोऽविलम्बं तद्दिनं तथा॥

---

१४ चतुर्दशोऽध्यायः ।

१ इस्रायेलं प्रति परमेश्वरस्य कृपा ३ बाबिलं प्रति इस्रायेलः व्यङ्गवाक्यं २१ अशूरीयान् प्रति भविष्यद्वाक्यं २९ पिलेष्टीयानां भविष्यद्वाक्यं ।

१ परेश्वरो हि याकूबि करिष्यति कृपां तदा ।
इस्रायेलं मनोनीतं करिष्यति पुनश्च सः ।
स तेभ्यो निजदेशे च विश्रामं परिदास्यति ।
तेनान्यजातिया युक्ता भविष्यन्ति च तैः सह
तथा याकूबवंशे च भविष्यन्ति हि संयुताः ।
२ अन्यदेशीयलोकास्तान् नेष्यन्ति च निजं स्थलं ।
इस्रायेलीयवंशश्च देशे तान् परमेशितुः ।
यथा दासान् यथा दासीः तथैवाधिकरिष्यति ।
ते येषां किङ्करा आसन् तान् करिष्यन्ति बन्दिनः ।
उपद्रवकृतां नृणां करिष्यन्ति च शासनं ॥
३ तदा दुःखं भयं चैव कठोरदास्यबन्धनं ।
तेभ्यः परेश्वरस्तुभ्यं सुविश्रामं प्रदास्यति ।
४ तेन बाबिल् भूपस्याधि दृष्टान्तं कथयिष्यसि ।
रुधो ऽन्यायकरो हा हा कीदृक् उच्छिन्नतां गतः
स्वर्णापहारिणी चैषा कीदृक् उच्छिन्नतां गता ।
५ दुष्टानान्तु मनुष्याणां दण्डञ्च परमेश्वरः ।
अर्थात् शासकलोकानां दण्डस्य भग्नतां व्यधात् ।

६ यः क्रुध्यन् जनान् लोकान् आघातेन निरन्तरं।
क्रुद्धान्यदेशजानां च आधिपत्यं चकार च।
अधुना यन्त्र्यते सोऽपि केनापि न निवार्य्यते।
७ पृथिव्याः सकला लोकाः प्राप्ता निश्चिन्तमानसाः।
तिष्ठन्ति च तथा सर्व्वे कुर्व्वन्त्यानन्दजं ध्वनिं।
८ देवदारु र्लिवानोन एरसः सर्व्वपादपाः।
आनन्दिता वदिष्यन्ति त्वामुद्दिश्य कथामिमां।
यावत् पतितवान् त्वन्तु तावदस्मत् समीपकं।
कोऽपि छेदनकर्त्तारो नैवागच्छन्ति कुत्रचित्।
९ त्वय्यागते त्वया सार्द्धं साक्षात् कर्त्तुमधः स्थिताः।
सकलाः परलोका ये चलितास्ते भवन्ति हि।
स त्वत्कृते ऽखिलान् वीरान् तथैव पृथिवीस्थितान्।
लोकान् सर्व्वान् पराक्रान्तान् करोति हि सचेतनान्।
भूपतीन् भिन्नदेशीयान् उत्थापयति चासनात्।
१० ते सर्व्वे तव सान्निध्यम् एत्य वाक्यं वदन्ति च।
रे त्वं त्वञ्च किमस्माकं सदृशो दुर्ब्बलो ऽभवः।
त्वं किं वा संपरिप्राप्त आस्माकीनसमानतां।
११ गर्व्वं ते तव यन्त्रस्य मधुरं वाद्यमेव च।
पर्य्यवारोहयत् किं वा श्मशानस्थानमेव हि।
कीटः किं तव शय्याभूत् कृमिराच्छादतां गतः।

१२ अनूरुपुत्र भक्तन अधातीव त्वमेव यः ।
किं वा त्वं नभसो मध्यात् पतनं परिप्राप्तवान् ।
किञ्चित् भिन्नदेशिन् किं त्वं भूमौ छिन्नतां गतः ।
१३ मनसा चिन्तितं चैतत् स्वर्गं आरोक्ष्यते मया ।
सिंहासनं निधास्येऽहं प्रांशु ताराभ्य ईश्वितुः ।
उदीच्यामुपवेक्ष्यामि समज्ज्यापर्व्वतोपरि ।
१४ पारे मेघस्य यास्यामि यथा स्वर्गोपरिस्थितः ।
१५ किन्तु श्मशानमर्थ्यात्त्वं खातैकमवरूढवान् ।
१६ त्वां पश्यन्तो निरीक्षन्ते त्वामेकदृष्टितो जनाः ।
विविच्य मनसा त्वां ते वाक्यमेतत् वदन्ति च ।
यो ऽकम्पयत् धरित्रीञ्च राज्यं सर्व्वमचालयत् ।
१७ समुच्छिन्नाः पुरो येन संसारश्च वनीकृतः ।
बन्दिलोकान् गृहं यातुं नादात् स किम् अयं नरः ।
१८ सर्व्वदेशनृपा मानात् श्मशानेषु स्वपन्ति हि ।
१९ उत्थापितः श्मशानात् त्वं शुष्कशाखासमोऽभवः ।
खड्गविद्धो हतः खाते ग्रावचित्रजनावृतः ।
दलितश्चरणाभ्यां च लुप्तशवस्य समोऽभवः ।
२० त्वं स्वीयदेशमुच्छिद्य हतवान् निजमानवान् ।
अतस्तैः सह नैव त्वं श्मशानं परियास्यसि ।
कुकर्म्मकारिवंशस्य यशो न कुत्रचिद् भवेत् ।

२१ तेषां पूर्व्वमनुष्याणाम् अधर्म्मादेव केवलात् ।
तेषां सन्तानवर्गं त्वं निहन्तुं परिचेष्टसे ।
तदुत्थाय धरां नैवाधिकुर्य्युर्हि कदाचन ।
नगरैः परिपूर्णाञ्च न कुर्य्युरखिलं जगत् ।
२२ यतो वाक्यमिदं वक्ति सैन्याध्यक्षः परेश्वरः ।
समुत्थास्याम्यहं तेषां मनुष्याणां विरुद्धतः ।
परेशो वक्ति बाबिलो नाम पुत्रादिकं तथा ।
अवशिष्टान् मनुष्यांश्च समुच्छेत्स्याम्यहं ध्रुवम् ।
२३ सैन्याध्यक्षपरेशेन वाक्यमेतदुदीर्य्यते ।
शल्लक्यधिकृतं चैतत् करिष्ये नगरं मया ।
कासारभूमिकामेव करिष्यामि पुरीमिमां ।
तस्याः संहारमार्जन्या प्रकरिष्यामि मार्जनं ॥
२४ सैन्याध्यक्षपरेशेन संशप्येदमुदीर्य्यते ।
अवश्यं भविता तद्वत् मया यद्वत् निरूपितं ।
भविष्यति तथा सिद्धं यथाभिलषितं मया ।
२५ अशूरीयान् निजे देशे परिभेत्स्यामि निश्चितं ।
स्वकीयपर्व्वते चापि मर्द्दयिष्यामि तान् जनान् ।
लोकस्कन्धात् युगं तेषां ततो दूरीभविष्यति ।
कन्धरेभ्यस्तथा तेषां भारो नीतो भविष्यति ।
२६ स्थिरोयं नियमश्चास्ते सकलान् नीवृतः प्रति ।

करोत्ययं सुविस्तीर्णः सर्व्वान्यदेशोपरि ।
२७ सैन्याध्यक्षपरेशेन यदेतन्मानसं कृतं ।
तदन्यथा विधातुं हि शक्नोति कश्च मानुषः ।
यौ हस्तौ विस्तृतौ तस्य को वा तौ परिवर्त्तयेत् ॥
२८ भूपतेराहसो मृत्यु र्बभूव यत्र वत्सरे ।
इदन्तु वचनं तस्मिन् समये संप्रकाशितं ॥
२९ हे पिलेष्टीय येन त्वं दण्डेन प्रहतो ऽभवः ।
तद् भग्नत्वादेकमना आनन्दं प्रविधेहि न ।
यतस्तन् मूलतः सर्पात् कृष्णसर्पो जनिष्यते ।
ज्वलदुड्डीयमानो ऽहिः फलं तस्य भविष्यति ।
३० दीनानां ज्येष्ठसन्ताना: प्रकरिष्यन्ति भोजनं ।
तथा दरिद्रलोकाश्च शयिष्यन्ते निरापदः ।
किन्तु ते मूलवंशं स दुर्भिक्षान्नाशयिष्यति ।
तथा तवावशिष्टांश्च लोकान् स निहनिष्यति ।
३१ पुरेण क्रियतां हा हा हे द्वार रूद्यतां त्वया ।
सर्व्वथा त्वं पिलेष्टीय व्याकुलत्वं गमिष्यसि ।
यत उत्तरतो देशात् धूमएष समेति हि ।
तत्सैन्यमध्यतः कोऽपि न याम्ति श्रेणितो बहिः ।
३२ अन्यदेशीयदूतेभ्यो दास्यते च किमुत्तरं ।

सियोनो भित्तिमूलन्तु स्थापितं परमेशिना ।
दरिद्रा मानुषा स्तस्य भविष्यन्ति तदाश्रयाः ॥

## १५ पञ्चदशोऽध्यायः ।

१ अश्शूरीयस्य भूपतेरागमनात् मोयाबो भविष्यद्दुर्दशा ।

अधि मोयाबं वाक्यम् ।

१ उच्छिन्नत्वमनाथत्वञ्चार्मोयाब् निशि यास्यति ।
उच्छिन्नत्वमनाथत्वं कीर्मोयाब् निशि यास्यति ।
२ देवालयोऽस्तस्थाने जना यास्यन्ति रोदितुं ।
मोयाब् करिष्यते हा हा निबोश्च मेदिवां प्रति ।
शिरांसि मुण्डयिष्यन्ते श्मश्रूणि चापि मानवैः ।
३ तस्य मार्गेषु लोकाश्च परिधास्यन्ति शाणजं ।
तस्य प्रासादपृष्ठे च श्रेष्ठस्थानेऽपि तस्य च ।
हा हा शब्दं करिष्यन्ति चावरोक्ष्यन्ति क्रन्दिताः ।
४ श्रोष्यते यहसं यावद् हिष्बोनइलियलोरवः ।
मोयाबो योद्धृवर्गेण स्वर आर्त्तः करिष्यते ।
प्राणेष्वेव स्वकीयेषु भारबोधो भविष्यति ।
५ मोयाबं प्रति मे चित्त करोति प्रतिरोदनं ।
पलायिता जनास्तस्य यावच्च सोयरं पुरं ।
इत्वा शब्दं करिष्यन्ति यथा गौस्त्रिवर्षिका ।
लूहीत उच्चमार्गे ते समारोक्ष्यन्ति क्रन्दिताः ।

होरोनयिमपथे हा हा रटिष्यन्ति विनाशतः।
६ निम्रीमः सकलं तोयं शुष्कतां परियास्यति।
तृणानि म्लानिमेष्यन्ति घासाभावो भविष्यति।
हरिद्वर्णं न किञ्चिच्च परिस्थास्यति कुत्रचित्।
७ प्राप्तं धनञ्च ते खेषां सञ्चितं द्रव्यमेव च।
विटपिनां तटस्थानां नेष्यन्त्युपत्यकोपरि।
८ वेष्टिष्यते चतुर्दिक्षु मोयाबं रोदनो रवः।
यावद् ईग्लयिमं स्थानं तस्य हाहेति श्रोष्यते।
श्रोष्यते चार्त्तनिर्घोषो यावद्बेरेलिमाख्यकं।
९ तथा दीमोन्जलं सर्व्वं रक्तवर्णं भविष्यति।
किन्त्वहं दीमने दुःखं प्रदास्यामि पुनः पुनः।
पलायिताश्च मोयाबो देशावशिष्टमानुषाः।
ये सन्ति तानहं सिंहं समानेष्यामि निश्चितं॥

१६ षोडशोऽध्यायः।

१ मोयाबं प्रति विलापकथनं ६ तद्दोषाच्चाहङ्कारचेतोमतस्य दूषणं।

१ प्रान्तरेण हि सेलातः सियोनाख्यशिलोच्चयं।
देशाध्यक्षं समुद्दिश्य प्रेष्यतां मेषशावकः।
२ निराकृतानां नीडेभ्य स्तथा भ्रमणकारिणः।
पक्षिणां दुर्द्दशा यादृक् मोयाबः कन्यकां प्रति।
तथैवार्णोनघट्टे तु दुरवस्था घटिष्यते।

३ मन्त्रणां प्रकुरुष्व त्वं न्यायार्थं सज्जितो भव ।
निजां छायाञ्च मध्याह्ने विधेहि रजनीमिव ।
तथा वहिष्कृतान् सर्व्वान् मनुष्यान् त्वं प्रगोपय ।
पलायितमनुष्यांस्त्वं न कदापि प्रकाशय ।
४ हे सियोन् मे मनुष्या ये मोयाबः प्रवहिष्कृताः ।
त्वया तेभ्यो मनुष्येभ्यो वासस्थानं प्रदीयतां ।
नाशकानां समक्षाच्च प्रच्छन्नास्तां नरा हि ते ।
यस्मादुपद्रुतो लोका जीविष्यन्ति पुन र्नहि ।
तथा नाशकलोकानाम् शेषएव भविष्यति ।
वयं प्रदलिता येन निजपादतलेन हि ।
स्वकीयदेशतः सोपि समुच्छिन्नो भविष्यति ।
५ युष्मत् सिंहासनं तेन कृपया स्थापयिष्यते ।
न्यायान्वेषणकारी च दण्डाज्ञासुप्रदायकः ।
ईदृग्विचारकश्चैको दायूदः स्वनिवासके ।
उपरिष्टाच्च तस्यैव न्यायेन समुपवेक्ष्यति ॥
६ मोयाबीयं वयं दर्पं गर्व्वमत्यन्तमेव च ।
अहङ्कारं समस्तञ्च कोपोग्रं वचनन्तथा ।
अतीव गर्व्वसंयुक्तः स एव परिज्ञातवान् ।
तस्मात् तच्छ्लवाग् सर्व्वा भविष्यति निरर्थिका ।
७ अतो मोयाब् एवं हा हा वक्ष्यं प्रकरिष्यति ।

तद्दोयसर्व्वदेशीया रोदिष्यन्ति च मानुषाः।
एवं कीर्हेरसाख्यस्य पर्य्युच्छिन्नन्तु यत् स्थलं।
तदर्थमेव चात्यन्तं रोदनं प्रकरिष्यथ।
नितान्तमेव तत् स्थानं पतितं हि भविष्यति।
८ हिष्वोनीयस्य यत् क्षेत्रं तन्तु म्लानं भविष्यति।
यासेरमगमद् यावद् यद्दल्या नवपल्लवः।
यस्याः शाखा गतारण्यं सिन्धुपारं गतैधिता।
सिव्माया इब्ली यासीद् गोस्तनी प्रततिस्तु तां।
देशीया अधिपा ये ते गमयिष्यन्ति नाशनं।
९ अतः सिव्माद्भवा द्राक्षा वल्ली या तन्निमित्ततः।
यासेरो रोदनं याद्दृक् करिष्ये क्रन्दनं तथा।
हे हिष्वोन् हे इलीयाली युवयोरेव नेत्रतः।
विनिर्गतै र्हि कीलालैरभिषेक्ष्याम्यहं युवां।
यत् ते द्राक्षाफलच्छित्तेः शस्यानां छेदनस्य च।
समये सिंहनादानामुपस्थानं भविष्यति।
१० आनन्दः फलवत्क्षेत्राद् आमोदश्चापयास्यतः।
द्राक्षाक्षेत्रे न लोकानां जयगाने भविष्यतः।
पदाभ्यां मर्द्दयिता ते जनाः कुण्डे पुना रसं।
नैव निःसारयिष्यन्ति हर्षश्च न भविष्यति।
११ मोयाबार्थञ्च मे नाडी कीर्हेरार्थं ममान्तरं।

वदति वक्ता यादृक् तादृगेव वदिष्यति।
१२ यदा मोयाव् निजं क्लान्तं उच्चस्थाने प्रभोत्स्यते।
तदा स प्रार्थनां कर्त्तुं पूतं स्थानं प्रवेक्ष्यति।
किन्तु तदीयं कार्य्यन्तु नहि सिद्धिं गमिष्यति॥
१३ परेश्वरः इदं वाक्यं मोयावमधि प्रोक्तवान्।
१४ किन्त्विदानीं परेशेन वाक्यमेतदुदीर्य्यते।
भृत्यस्य वत्सरैस्तुल्ये वत्सरत्रितये गते।
संक्षेप्स्यते हि मोयावः प्रतापजनते उभे।
अवशिष्टा भविष्यन्ति जनाः स्वल्पाश्च दुर्ब्बलाः॥

## १७ सप्तदशोऽध्यायः।

१ अरामं शोमिरोणञ्च प्रति भविष्यद्वाक्यं ९ अवशिष्टलोकानां देवार्चापरित्यजनं १२ इस्रायेल अनूणां दुःखञ्च।

## दम्मेषकम् अधि कथनम्।

१ दम्मेषकनगरं यत् तत् प्रोच्छिन्नत्वं प्रयास्यति।
तथा विनष्टवस्तूनां स्थिहि राशि भविष्यति।
२ अरोयेरस्य सर्व्वाणि त्यक्ष्यन्ते नगराणि हि।
पशुपालकलोकानां सोऽधिकारो भविष्यति।
तेषु स्थानेषु सर्व्वेषु स्वप्स्यन्ति पशुसंचयाः।
नहि केपि मनुष्यास्तान् ताडयिष्यन्ति वै पशून्।
३ दुर्गमिफ्रयिमस्यैव राज्यं दम्मेषकस्तथा।

अरामः शेषराज्यञ्च लुप्तमेव भविष्यति ।
सैन्याधिपतिः स कथयेत् परमेश्वरः ।
इस्रायेलीयवंशस्य ते भविष्यन्ति गौरवम् ।
४ तदानीमेव याकूबो गौरवस्य ह्रसिष्यति ।
तदीयस्थूलतायाश्च कार्श्यमेव भविष्यति ।
५ यथा शस्यं ग्रहीतुञ्च कणिषं कोपि छिनत्ति ।
उपत्यकारिफायीमम् अथवा परिगत्य हि ।
कणिषाणि प्रमृष्टाति तद्वदेव भविष्यति ॥
६ इस्रायेलः प्रभु र्वाक्यमिदं वक्ति परेश्वरः ।
यथैव जितवृक्षस्य फलानां शातनात् परं ।
तदीयात्युच्चशाखायां द्वे वा त्रीणि फलानि च ।
फलवत्स्तु तच्छाखायां सन्ति चत्वारि पञ्च वा ।
तथा स्थास्यति तस्यापि किञ्चित् किञ्चिच्च शेषता ।
७ तदानीं प्रतिमंस्यन्ते स्वस्रष्टारं हि मानवाः ।
इस्रायेलधर्म्मरूपस्य दृष्टतस्तस्य लोचने ।
८ न मंस्यते च वेदिं स स्वीयहस्तेन निर्म्मितां ।
निजाङ्गुलिकृतं कर्म्म चैत्यवृक्षन्तथैव च ।
सूर्यस्य प्रतिमाश्चैव न तेन प्रतिमंस्यते ।
९ इस्रायेलीयवंशस्यागमे त्यक्तं यथाभवत् ।
वनस्थं पर्व्वतस्थञ्च नगरं तद्वदेव हि ।

गडयुक्तं पुरन्तेषां त्यक्तमुच्चैर्भविष्यति ।
१० स्वकीयत्राणकारी यस्तं त्वं व्यस्मार ईश्वरं ।
त्वदीयबलरूपं त्वं पर्व्वतं स्मृतवान् नहि ।
अतस्त्वमङ्कुरान् चारून् शाखाश्च परदेशजाः ।
रोपयित्वा च तत्शाखा यद्यपि प्रतिवर्द्धयेः ।
११ तथा प्रातस्त्वदीयांश्च निर्यापयसि पल्लवान् ।
दिने ऽनिवार्य्यदुःखस्य पतिष्यन्ति फलानि हि ॥
१२ हा हा बहुमनुष्याणां भवतीह कलो रवः ।
कोलाहलं प्रकुर्व्वन्ति गम्भीरमिव ते जलं ।
तथान्यदेशजातानां परिगर्ज्जनतोपि ते ।
मनुजाः परिगर्जन्ति महाजलधिगर्जवत् ।
१३ गर्जिष्यन्त्यन्यदेशीयाः प्रभूतसलिलं यथा ।
किन्त्वीश्वरो मनुष्यांस्तान् निश्चितं तर्जयिष्यति ।
तेन ते मानुषा दूरात् करिष्यन्ति पलायनं ।
यथा वायोः समक्षं वुषं पर्व्वतसंस्थितं ।
वात्यायत्तृणवत् ते च भविष्यन्ति निराकृताः ।
१४ तथा पश्यत सन्ध्यायाम् उपस्थास्यति साध्वसं ।
पूर्व्वं प्रभाततः सर्व्वं विनाशञ्च गमिष्यति ।
अस्माकं हरतां नृणाम् अधिकारोयमस्ति हि ।
अस्माकं लोठिलोकानाम् अंशएष च विद्यते ॥

१८ अष्टादशोऽध्यायः ।

१ परमेश्वरीयप्रभुणां विनाशो राज्यवृद्धिश्च ।

१ देश कूशनीवृतो धुन्याः पारस्थ पक्षशब्दवन् ।
उडुपेनाब्धितोयेषु दूतप्रेरणकारक ।
२ हे शीघ्रगामिनो दूता यस्य देशोऽस्ति विस्तृतः ।
क्रूरस्य प्रथमात् कालात् यावदद्य भयङ्करः ।
रज्ज्वा परिमितो नद्या विभक्तो दलितस्तथा ।
तस्य देशस्य लोकानां यूयं संयात सन्निधिं ।
३ हे जगद्वासिनो लोका हे भुवि स्थायिनो जनाः ।
यदाद्रौ ध्वज उत्तिष्ठेत् तदा यूयं प्रपश्यत ।
तूरीशब्दं यदा कुर्य्यात् निशामयत तं तदा ।
४ यतः परेश्वरो यः स मामिदं प्रत्यभाषत ।
ग्रीष्मकाले यथा रौद्रं शस्यानां कर्त्तनीयके ।
ग्रीष्मकाले यथा मेघः शिशिरेण समायुतः ।
उपविश्य निजावासे निरीक्षिष्याम्यहं तथा ।
५ द्राक्षासञ्चयनात् पूर्व्वम् अङ्कुरे पूर्णतां गते ।
उत्पत्स्यन्ते यदा पुष्पात् पक्वद्राक्षाफलानि च ।
कर्त्तिष्यन्ते तदा तेन कर्त्तन्या तस्य पल्लवाः ।
तदीयाः सर्व्वशाखाश्च छित्वा स दूरयिष्यति ।
६ ताः सर्व्वाः पर्व्वतस्थानां निमित्तं हिंस्रपक्षिणां ।

वनजातपशूनाञ्च संत्यच्यन्ते हि सर्व्वतः।
ग्रीष्मं संयापयिष्यन्ति तत्रैव हिंस्रपक्षिणः।
शीतं संयापयिष्यन्ति पशवो वनसम्भवाः।
७ तदा यो विस्तृतो नीवृत् क्रूरश्च परिविद्यते।
आरभ्य प्रथमं कालम् अद्य यावत् भयङ्करः।
दलितः प्रमितो रज्ज्वा धुन्या विभक्ततां गतः।
तद्देशस्थितलोकेभ्यः सैन्याध्यक्षे परेश्वरे।
सैन्याध्यक्षपरेशस्य नामसंयुक्तके स्थले।
अर्थात् शैलं सियोनाक्रम् आनेष्यन्त्युपढौकनं॥

## १९ ऊनविंशोऽध्यायः।

१ मिसरीयदुःखस्य कथनं १० राज्ञां मूर्खत्वकथनं १८ समाजस्य भविष्यद्वाक्यकथनञ्च।

### मिसरं प्रति भविष्यद्वाक्यं।

१ पश्यातितूर्णगन्तारं समारुह्य पयोधरं।
गमिष्यति मिसर्देशं त्वरया परमेश्वरः।
मिसर्जनपदे संस्था देवतानां गणास्तदा।
कम्पमाना भविष्यन्ति समक्षं परमेशितुः।
२ मिस्रीयान्तरचित्तानि यास्यन्ति द्रवतां तदा।
अहं मिस्रीयलोकानां विपरीतकृते ध्रुवं।
सुसज्जितान् करिष्यामि मिस्रीयानेव मानवान्।

तथैकैको जनः खेन भ्रात्रा युद्धं करिष्यति।
तथैव बन्धुना खेन सह युद्धं करिष्यति।
नगरेणैव साईश्च परं युद्धं करिष्यति।
राज्येन सहितं राज्यं तदा युद्धं करिष्यति।
३ मिस्रीयान्तरसंस्थश्च चयं यास्यति मानसं।
अहञ्च मन्त्रणां तेषां संप्रसिष्यामि निश्चितं।
प्रतिमां भ्रामकांश्चैव भूतज्ञं गुणिनस्तथा।
तदानीं मानुषास्ते तु परिप्रक्ष्यन्ति मन्त्रणां।
४ सैन्याध्यक्षः परेशो य इदं वाक्यं ब्रवीति सः।
अर्पयिष्ये मिसर्देशं करे दुर्जनभूपतेः।
दुरन्तो मेदिनीनाथ स्तस्मिन् राज्यं करिष्यति।
५ तदानीं तोयधेस्तोयं शुष्कतां प्रतियास्यति।
नदश्च शुष्कताञ्चैव तटिनी परियास्यति।
६ तथा स्रोतस्वतीयश्च दुर्गन्धत्वं प्रयास्यति।
खातश्च मिसरः शून्यं शुष्कतां प्रतियास्यति।
ततः शरवनञ्चैव नलश्च परिशोष्यति।
७ नदीतटे तटिन्याश्च सन्निधौ संस्थितानि हि।
सर्व्वाणि च तृणादीनि क्षेत्राणि निकषा नदीं।
सर्व्वाणि वस्तुजातानि म्लानतां समवाप्य च।
शुष्कताञ्चापि संप्राप्य यास्यन्ति परिचालितां।

८ तेनैव धीवरा लोका विलपिष्यन्ति हा वत।
ये पारे वडिशं नद्यां विलपिष्यन्ति मानुषाः।
स्रोतसां सम्मुखे ये च जालं संयोजयन्ति च।
ते ते च मानुषाः सर्व्वे यास्यन्ति च विषादतां।
९ ये पट्टसूत्रसूचेण कर्म्म कुर्व्वन्ति मानुषाः।
संग्रन्थ्यन्ति च जालं वा प्रगन्थिष्यन्ति ते चर्पां।
१० ते संभग्ना भविष्यन्ति ये स्तम्भसदृशा नराः।
वेतनग्राहिणो ये ते दुःखं प्राप्स्यन्ति मानसे॥
११ सोयनोऽध्यचवर्गस्तु मूर्खत्वं समुपेष्यति।
फिरौणः सुबुधामात्याः परियास्यन्ति मूर्खताम्।
अज्ञानता भविष्यन्ति तेषां सकलमन्त्रणाः।
अस्म्यहं ज्ञानिनः पुत्रः प्राचीननृपतेः सुतः।
एतादृशानि वाक्यानि फिरौणो नृपतेः पुरः।
यूयं केन प्रकारेण सम्यग् परिगदिष्यथ।
१२ इदानीं कुत्र युष्माकं ज्ञानिनः सन्ति मानवाः।
सैन्याध्यक्षपरेशेन मिसरः प्रतिकूलतः।
अकारि नियमो यस्तैरेत्याद्योत्य स उच्यतां।
१३ मूर्खाएव भविष्यन्ति सोयनो मुख्यमानवाः।
मेफीया अधिपा ये ते परियास्यन्ति भ्रान्ततां।
सम्भरूपा भवन्तस्ते भ्रमयिष्यन्ति मिसिराम्।

तेषामेव मनुष्याणां मध्यतः परमेश्वरः ।

१४ आत्मानं विपरीतं वै संप्रविष्टं करिष्यति ।

मत्तो लोको यथा स्वीये वान्ते प्रपतति स्खलन् ।

मिसरं भ्रमयिष्यन्ति तथा ते सर्व्वकर्म्मसु ।

१५ शिरसा शाखया वापि लाङ्गूलेन नलेन वा ।

कार्य्यं किमपि नो सिद्धं मिसर्देशे भविष्यति ।

१६ तदानीं मिसरो लोका भविष्यन्तीव योषितः ।

चालिष्यति करस्तेषु सेनाधिप परेशिता ।

वेपिष्यन्ति च भेष्यन्ति ते नरास्तस्य चालनात् ।

१७ सेनाधिप परेशेन नृणां तेषां विरुद्धतः ।

अकारि मन्त्रणा या तु तस्याएव निमित्ततः ।

भविष्यति भयंदायी यिहूदा मिस्रिनः प्रति ।

ये तन्नाम करिष्यन्ति ते संयास्यन्ति साध्वसं ।

१८ मिसर्देशे तदा पञ्च स्थापिष्यन्ते पुराणि हि ।

किनान् देशीयभाषाया भविष्यन्ति च वादिनः ।

शपथञ्च करिष्यन्ति सैन्याध्यक्षपरेशितुः ।

एवं तेषां मनुष्याणां पुराणामेकमेव हि ।

सूर्य्यनगरनाम्ना च प्रविख्यातं भविष्यति ।

१९ तस्मिन् काले मिसर्देशे मध्यस्थाने परेशितुः ।

एका यज्ञीयवेदी तु भविष्यति विनिश्चितं ।

तथा तद्देशसीमायाः समीपे परमेश्वरम् ।
समुद्दिश्य स्तम्भ एको मानवैः स्थापयिष्यते ।
२० उपद्राविमनुष्येभ्यः साध्वसात् ते यदैव हा ।
समीपे परमेशस्य प्रार्थने प्रकृते सति ।
प्रतिकारकमेकन्तु प्रहित्य परित्रारकं ।
तेन तेषां मनुष्याणां समुद्धारे कृते सति ।
तद्धि स्तम्भो मिसर्देशे सैन्याध्यक्षपरेश्वरम् ।
उद्दिश्य चिह्नमेकञ्च साक्षिरूपो भविष्यति ।
२१ तदानीं मैसरै र्लोकैः ज्ञास्यते परमेश्वरः ।
अपरं तं परिज्ञाय मिस्रीया ये तु मानवाः ।
बलिदानैश्च नैवेद्यैस्तं भजिष्यन्ति सन्ततं ।
तत्समीपे प्रतिश्रुत्य साधयिष्यन्ति मानसं ।
२२ मिस्रीयान् मनुजान् इत्थं परेशः प्रहरिष्यति ।
तथा प्रहारं कृत्वा तान् करिष्यति निरामयान् ।
परमेशाय तेषान्तु परावृत्ते च मानवे ।
स तेषां मानवानाञ्च प्रतिगृह्य निवेदनं ।
तानेव मानुषान् सर्व्वान् परिमुक्तान् करिष्यति ।
२३ तस्मिन् काले मिसर्देशाद् अशूरं देशकं प्रति ।
गमनाय मनुष्याणां राजमार्गो भविष्यति ।
अशूरीया यथा तेन मनुष्या मिसरं प्रति ।

अशूरं प्रति मिसरीयाः करिष्यन्ति गमागमं।
अशूरैः सह मिसरीये सेवनं समदर्श्यते।
२४ तदानीं तु मिसरीयस्य इस्रायेल् मिसरा सह।
अशूरा च समं भावी तृतीयं क्षेमकारणं।
२५ सैन्याध्यक्षः परेशश्च आशिषा व्याहरिष्यति।
मम मिसरीयलोका अशूरीयाः करनिर्मिताः।
इस्रायेल् अधिकारश्च धन्या एव भवन्तु मे॥

२० विंशतितमोऽध्यायः।

मिसरो भविष्यद्वचः।

१ यदा अशूरीयसर्गोणा भूपेन प्रेरितो भवन्।
तर्तान् अश्दोद् पुरं गत्वा तदाक्रम्य वशेऽकरोत्।
२ तदैव समये वाक्यमिदम् आमोसपुत्रकं।
यिशयियाभिधानं हि परेशः समभाषत।
त्वं गत्वा प्रथमं वस्त्रं स्वकीयकटिदेशतः।
परिमोचय पादाभ्यां पादुके च विमोचय।
ततः स नग्नं कृत्वा यथावदनुसारतः।
शून्यपादश्च भूत्वा स भ्रमितुम् उपचक्रमे।
३ तदानीं परमेशेन वाक्यमेतदभाष्यत।
यिशयियो मदीयोऽयं दासो नग्नश्च यद्वत्।
अभ्रमत् शून्यपादश्च तत् मिसर्कूशदेशिनां।

लोठकारिमनुष्या ये ते करिष्यन्ति लोठनं ।
विनाशकारिणो लोकाः करिष्यन्ति विनाशनं ।
हे एलम् उपतिष्ठ त्वं पुरं वेष्टय मादिये ।
यतो मया विलापस्य शेषत्वं प्रकरिष्यते ।
३ सर्व्वस्मिन् कटिदेशे च वेदना सम्प्रजायते ।
वेदना पर्य्यगृह्णात् मां स्त्रीप्रसूतिवेदना यथा ।
अहं मूर्च्छां समागच्छं तेनाहं श्रुतवान् नहि ।
अभवं व्याकुलश्चाहं तेनैव दृष्टवान् नहि ।
४ मनो मे स्तम्भितं जातं शङ्का मां समधारयत् ।
यस्यां रात्रौ समानन्दं तां चकार भयानिकां ।
५ भोज्यासनं सुसज्येत रक्षिणः स्यु र्निरूपिताः ।
प्रकुर्व्वन्ति मनुष्यास्ते पानस्य परिभोजनं ।
समुत्तिष्ठत चाध्यक्षाः फलकान्यभिषिञ्चत ।
६ यतश्च परमेशो मां वाक्यमेतदभाषत ।
इतस्त्वं गमनं कृत्वा रक्षिणं संनियोजय ।
ततो दृक्ष्यति यद्यत् स तद्वार्त्तां त्वां प्रभाषतां ।
७ तत्पश्चात् रथमेकञ्च ह्याश्वारूढद्वयन्तथा ।
अपश्यद् गर्द्दभारूढम् उष्ट्रारूढञ्च दृष्टवान् ।
८ तेनातीव प्रयत्नं स परिविधाय रक्षकः ।
मनो निधाय प्रोच्चैश्च वाक्यमेतदभाषत ।

मत्प्रभो रक्षिणः स्थाने तिष्ठामि निखिलं दिनं ।
अपरं रक्षिणः स्थाने समस्तामेव शर्व्वरीं ।
दण्डायमानस्तिष्ठामि स्वयमेव दिने दिने ।
९ पश्य रथो हयारूढौ जनौ समभिगच्छतः ।
तेनैको मानवो ऽवादीत् बाबिल् पुरी समापतत् ।
पतिता पतिता बाबिल् भग्नास्तद्देवमूर्त्तयः ।
१० हे मर्द्दनीय मे शस्य मर्द्दनस्थानशस्य मे ।
सैन्याध्यक्षप्रभोः स्थाने इस्रायेलीश्वरस्य च ।
यदश्रौषं तदेवाहं युष्मान् ज्ञापितवान् अदः ॥

अधिदुमां भविष्यद्वाक्यम् ।

११ सेयीरः कोऽपि मामाह्वत् वचनञ्चेदमब्रवीत् ।
हे रक्षिन् किं विभावर्य्या हे रक्षिन् किं भविष्यति ।
१२ अस्मिन् प्रश्ने समायाते रक्षी प्रत्युत्तरं ददौ ।
प्रातः कालः समायात आयास्यति विभावरी ।
अन्वेषितुं त्वमिच्छेश्चेत् तदान्विष्याव्रजेः पुनः ॥

अरबियामधि भविष्यद्वाक्यम् ।

१३ हे पान्था दिदनीयानां अरबीयारण्यगोष्ठतः ।
वने यूयं तमस्विन्यां शयनं प्रकरिष्यथ ।
१४ हे तेमावासिनो लोकास्तृषितान् मानुषान् प्रति ।
प्रदातुं सलिलं यूयं समुपानयताखिलाः ।

मध्येभित्तिद्वयोरेव काषार: परिखन्यते ।
किन्तु सर्व्वाणि चैतानि निष्पादयति य: स्वयम् ।
नहि तं प्रति युष्माभि र्दृक्पातोपि विधीयते ।
स्थिरीकरोति तत्पूर्व्वं य: स नो परिमन्यते ।
१२ सेनाधिपतिना तेषां काले ऽस्मिन् परमेश्विना ।
हा हा च क्रन्दनं कर्तुं शिरो मुण्डयितुं तथा ।
कृते युष्मत्समाह्वाने परिधातुं शणांशुकं ।
१३ आनन्दाह्लादतो यूयं हत्वा मेषं वृषं तथा ।
मांसानां भक्षणं कृत्वा पीत्वा च गोस्तनीरसं ।
इति ब्रूथायात कुर्म्म: पानञ्च भोजनं वयं ।
यत एव वयं सर्व्वे श्वो मर्त्तास्मो विनिश्चितम् ।
१४ सैन्याध्यक्षपरेशेन गदितं वचनन्त्विदं ।
शब्दयन्ती मदीयौ यौ तयोरेवं प्रकाशितं ।
सेनाधिपपरेशेन प्रभुणेदं प्रभाषितं ।
युष्माकं नैधन: कालो यावन्न समुपैष्यति ।
अधर्म्मस्यास्य संमर्षस्तावन्नहि भविष्यति ॥
१५ सैन्याध्यक्ष: परेशो य: प्रभु: स इदमब्रवीत् ।
शिब्नमन्त्र्यभिधानस्य गेहस्याधिपतिस्तु य: ।
त्वं तस्य सन्निधिं गत्वा वाक्यमेतदुदीरय ।
१६ उच्चे स्मशानकक्षैके स्वीयवासस्य स्थानक ।

अत्र त्वदीयमास्ते किं त्वदीयः कोऽत्र विद्यते ।
यतस्त्वया निजस्यार्थं श्मशानमत्र खाद्यते ।
१७ बलिन् पश्य परेशस्त्वामधः क्षिप्तं करिष्यति ।
तवैव गाढरूपेण धारणं प्रकरिष्यति ।
१८ फिङ्गावत् घूर्णयित्वा त्वां निक्षेप्स्यति बहुस्थले ।
तत स्तत्रैव प्राणानां परित्यागं करिष्यसि ।
तत्र स्थाने त्वदीयो यः स्यन्दनः स मनोहरः ।
निवेशनस्य तत्पत्यु र्भविष्यति त्रपास्पदं ।
१९ अहं दूरीकरिष्यामि तावकीनात् पदाच्च त्वाम् ।
तथावरोहयिष्यामि त्वां स्थानादपि तावकात् ॥
२०　अहं तदा निजं दासम् अर्थाद् हिल्कीयपुत्रकं ।
२१ आह्वयेलियकीमस्य तावकीनेन वाससा ।
राजकीयेन वस्त्रेण करिष्ये वस्त्रसंयुतं ।
त्वदीयकटिबन्धेन करिष्ये बलिनञ्च तं ।
तस्य हस्तेऽर्पयिष्यामि त्वदीयं शासनं पदं ।
संभविष्यति तातः स यिरूशालम् निवासिनां ।
यिहूदावंशलोकानां जनकश्च भविष्यति ।
२२ तस्य स्कन्धे प्रदास्यामि दायूद्वंशस्य कुञ्चिकां ।
तेन मुक्ते न चान्येन रुद्धुं कर्त्तुं प्रशक्ष्यते ।
तेन रुद्धेऽपि वान्येन मोक्तुं नैवाभिशक्ष्यते ।

२३ दृढस्थाने यथा बन्धो नागदन्तस्य जायते ।
अहं तथा करिष्यामि तस्यापि परिबन्धनं ।
पितृवंशनिमित्तं स भविता गौरवासनम् ।
२४ तन्नागदन्तके तस्य पितृवंशसगौरवं ।
महत्त्वोचानुरूपस्य सुतपाचात् चर्मपात्रकं ।
यावच्च क्षुद्रपात्राणि निधास्यन्ते ऽखिलानि वै ।
२५ प्रब्रवीति कथामेतां सैन्याध्यक्षः परेश्वरः ।
तत् काले नागदन्तो यः स्थापितोऽभूत् दृढे स्थले ।
स्थानान्तरं प्रणेतव्या सोऽच्छिन्ना च पतिष्यति ।
तदुपरि स्थितो भारः प्रच्छिन्नस्य भविष्यति ।
ईदृशं वचनं तेन परमेशेन कथ्यते ॥

२३ त्रयोविंशोऽध्यायः ।

१ कस्द्वीय मानुषैःसोरो भविष्यद्विनाशः १५ पुनरुन्नति

अधिसोर्नगरं भविष्यद्वचनञ्च ।

१ कुरुतार्त्तरवं यूयं तर्शीशपोतीयमानुषाः ।
सोराख्यनगरं यस्मात् समुच्छिन्नं भविष्यति ।
तद्दीयगेहमार्गस्य संस्थिति नं भविष्यति ।
तत्र स्थाने नरः कोपि प्रवेशं न करिष्यति ।
कित्तीमदेशादियं वार्त्ता प्रयातिष्यति वः प्रति ।
२ यूयं भवत निःशब्दा उपद्वीपनिवासिनः ।

सीदोनः परिपूर्य्येध्वे बणिग्भिः सिन्धुपारगैः ।
३ नीलाख्यायास्तरङ्गिन्याः सलिलोत्पन्नशस्यकं ।
द्रव्यञ्च तन्नदीजातं राजकीयः करो भवेत् ।
तस्यान्यदेशजातानां वद्गृहरूपं प्रजायते ।
४ हे सीदोन् त्वं प्रलज्जस्व यतएव सरित्पतिः ।
अर्थात् सिन्धो दृढं दुर्गम् एतद्वाक्यं प्रभाषते ।
प्रसूतियातना नैव प्राप्यापत्यं प्रसूय न ।
यूनो जनानसंपाल्य भूत्वा च युवती नंहि ।
अभवं यादृशस्त्वाहं भवामि तादृशोऽधुना ।
५ इयं वार्त्ता मिसर्देशं गतमात्रैव ते जनाः ।
व्यथिताः संभविष्यन्ति सोरदेशीयवार्त्तया ।
६ पारं गत्वा तु युष्माभि स्तर्शीशं प्रति गम्यतां ।
कुरुतार्त्तस्वरं यूयं उपद्वीपनिवासिनः ।
७ अवस्थितं पुराकालाद् जयध्वनिसमन्वितं ।
युष्माकं नगरं यत्तु तदेव किं भवेदिदम् ।
तच्च दूरे प्रवासार्थं स्वपद्भ्यामुपनीयते ।
८ हा हा यदीयाः सर्व्वे च बणिजो राजतुल्यकाः ।
उत्तमर्णाश्च यस्यासन् अध्यक्षमानवैः समाः ।
ईदृक् किरीटदंदातृ सोराख्यमस्ति यत् पुरं ।
तदीयविपरीतां कः कृतवान् मन्त्रणामिमां ।

९ तदीयसुन्दरत्वस्य गर्व्वस्य नाशकारणात्।
भूस्थसर्व्वमहल्लोकान् विधातुं तापमानकान्।
कृतवान् मन्त्रणामेतां सैन्याध्यक्षः परेश्वरः।
१० हे तर्शीशीय कन्ये त्वं प्रोच्छलन्त् तटिनी यथा।
उपरिष्टात् स्वदेशस्य स्वयमुच्छलिता भव।
नहि त्वदीया बाधा च कापि तत्र भविष्यति।
११ सिन्धूपरि परेशेन वितन्येते निजौ करौ।
तथा सर्व्वाणि राज्यानि चालितानि करोति सः।
वाणिज्यनगरस्यैव प्रोच्छेत्तुं गाढदुर्गकं।
तदीय प्रतिकूलस्य निदेशं प्रददात्यपि।
१२ स वदिष्यति, सीदोनः कुमारिभ्रष्टकन्यके।
कारिष्यते त्वया नैव पुनर्वारं जयध्वनिः।
इदानीं त्वं समुत्थाय पारं याहि च कित्तिमं।
किन्तु ते नहि तत्रापि विश्रामः संभविष्यति।
१३ पश्य कस्दीयदेशं त्वम् अगण्येषु स्थिता इमे।
अशूरर्पितवान् तन्तु हस्ते वननिवासिनाम्।
परिनिर्म्मायते दुर्गं सोरीयाट्टालिकां प्रति।
आक्रम्य च समुच्छेद्य करिष्यन्ति समां भुवं।
१४ कुरुतार्त्तस्वरं यूयं तर्शीशपोतीयमानुषाः।
युष्माकं सुदृढं दुर्गं यतो भग्नं भविष्यति॥

१५ तदानीं राज्ञ एकस्याधिकारस्थानुसारतः।
सप्तति वत्सरान् यावत् विस्मृतः सोर् भविष्यति।
१६ शेषे सप्ततिवर्षाणां सोर् वेश्येव प्रगास्यति।
चिरविस्मृतवेश्ये त्वं वीणां धृत्वा पुरं भ्रम।
प्रवाद्य सुस्वरं वीणां विविधं गीयतां त्वया।
तेनैव त्वं पुनर्वारं भविष्यसि सुसंस्मृता।
१७ सप्तति वत्सराणान्तु परिशेष उपागते।
सोरं प्रति परेशेन करिष्यते विवेचना।
ततः स पूर्व्ववाणिज्ये लाभकारे प्रवत्स्यते।
सामान्यं सर्व्वजगता सार्द्धं व्यवहरिष्यति।
१८ तदीयं यच्च वाणिज्यं तदीयो लाभएव च।
परमेश्वरमुद्दिश्य तत् पवित्रं भविष्यति।
किन्तु नो सञ्चितं तस्य रचितञ्च भविष्यति।
यतश्च परमेशस्य सम्मुखे संनिवासिनां।
बहुखाद्यं चारुवस्त्रं तद्वाणिज्यात् भविष्यति॥

२४ चतुर्विंशोऽध्यायः।

१ इत्यायेला भविष्यद्‌वक्तुः १२ अवशिष्टलोकानां सुखं शत्रूणां विनाशश्च।

१ पश्य परेशितोच्छिद्येत्यायेल् नामकनीवृतं।
शून्यं विधाय तस्यैव परिवर्त्तं करिष्यति।

तथा निवासिनस्तस्य सुविकीर्णान् करिष्यति ।
२ तस्माद् यथा मनुष्याणां तथैव च पुरोधसां ।
यथैव भृत्यलोकानां प्रभूणामपि तादृशी ।
यादृशी किङ्करीणाञ्च स्वामिन्या अपि तादृशी ।
यथा च क्रेतृलोकानां विक्रेतृणाञ्च तादृशी ।
उत्तमर्णजनानां यद्वद् अधमर्णजनानां तथा ।
उत्कोचदायिनां यद्वद् उत्कोचग्राहिणां तथा ।
३ संभविष्यत्यवस्थैका देशः शून्यो भविष्यति ।
लोठितो भविता चेति वाक्यमुक्तं परेशिना ।
४ राज्यन्तु रोदनं कृत्वा म्लानतां परियास्यति ।
तथैव पृथिवी दीना संम्लाना च भविष्यति ।
देशस्य दर्पिणो लोका भविष्यन्ति च दुर्ब्बलाः ।
५ अपवित्रस्य जातेन देशो निजनिवासिभिः ।
यतएव व्यवस्थां ते परिलङ्घन्ति मानवाः ।
भञ्जन्त्यनन्तनियमं कुर्व्वन्ति विधिमन्यथा ।
६ अतएवाभिशापेन कृत्स्नो देशो ग्रसिष्यते ।
सन्दण्डिता भविष्यन्ति देशे संस्थितमानुषाः ।
सन्दग्धाश्च भविष्यन्ति सर्व्वे देशनिवासिनः ।
तेषां मध्ये ऽवशिष्टाश्च स्थास्यन्ति स्वल्पमानुषाः ।
७ क्रन्दनं प्रकरिष्यन्ति नूतनो गोस्तनीरसः ।

तथैव गोस्तनीवल्ली शुष्कतां परियास्यति ।
आनन्दितमनोलोका निश्वसिष्यन्ति दीर्घकं ।
८ तथा ध्वानस्य खञ्जर्य्या सुनिवृत्तो भविष्यति ।
तथैव न पुनर्व्वारं जयशब्दो भविष्यति ।
वल्लक्या उल्लसद्ध्वानः सुनिवृत्तो भविष्यति ।
९ गायन्तस्ते जना नैव पास्यन्ति गोस्तनीरसं ।
मद्यपानां मुखे मद्यं तिक्तस्वादं भविष्यति ।
१० नगरं भग्नतां गत्वा नरशून्यं भविष्यति ।
सुरुद्धाश्च भविष्यन्ति तथैव सकला गृहाः ।
यथा तत्र जनः कोपि प्रवेष्टुं नैव शक्ष्यति ।
११ रसाभावात्तु गोस्तन्या भावी कोलाहलः पथि ।
परिणामं प्रयास्यन्ति सर्व्वाह्लादाश्च तत्क्षणात् ।
आनन्दाः सकलाएव यास्यन्ति देशतो बहिः ।
१२ महाकलरवाद् द्वारं भग्नं सत् निपतिष्यति ।
तदा स्थास्यति शून्यत्वं केवलं पुरमध्यतः ॥
१३ पृथ्व्यामर्थात् नृणां मध्ये दशेयं सङ्घटिष्यते ।
यथा जितफलाशातो द्राक्षाणामपि सङ्ग्रहात् ।
शातनं स्यात् यथा पश्चात् तद्वदेव भविष्यति ।
१४ गीतमुखैः प्रगास्यन्ति मनुष्या अवशिष्टकाः ।
काशयिष्यन्ति माहात्म्यं समुद्रात् परमेशितुः ।

१५ अतएव समास्थाय यूयं पूर्व्वीयनीवृतं ।
मङ्गिमानं परेशस्य प्रकाशयत सर्व्वथा ।
समुद्रदूरसीमायां तिष्ठन्तः परमेश्वितुः ।
इस्रायेलः प्रभोरेव प्रचारयत गौरवं ।
१६ मनुष्या धार्म्मिका धन्या गीतमेतद्वचोमयं ।
पृथिव्या दूरसीमातो वयमाकर्णयामहि ।
ततो मया समावादि चीणं चीणस्य मे वत ।
जायते मे मनस्तापो लोठिनो लोठयन्ति च ।
तथा ये लोठिनो लोकास्तेऽतीव लोठयन्ति च ।
१७ हे देशीयप्रजाः सर्व्वा युष्मान् प्रति च साध्वसं ।
उपस्थास्यति खातश्च प्रोन्माथः समुपैष्यति ।
१८ तेन कश्चिन्मनुष्यो यः साध्वसादेव कारणात् ।
जीविष्यति पलायित्वा स खाते निपतिष्यति ।
जीविष्यति च यः खातात् स उन्माथे धरिष्यते ।
यत ऊर्द्धस्थितं द्वारं मेघस्य मोचयिष्यते ।
तथैव पृथिवीमूलं वेपमानं भविष्यति ।
१९ सर्व्वतो दोलिता पृथ्वी चूर्णत्वं परियास्यति ।
पृथिवी च निजस्थानात् स्थानच्युता भविष्यति ।
२० यथा मत्तो मनुष्यः स्यात् तथा पृथ्वी स्खलिष्यति ।
सा निशैकप्रवासस्य उटइवत् संस्खलिष्यति ।

यतः सा स्वापराधस्य भारक्रान्ता पतिष्यति ।
तेनैव सा पुनर्व्वारम् उत्थानं न गमिष्यति ॥
२१ तदानीमुपरिस्थानि सैन्यानि परमेश्वरः ।
धरामण्डलसंस्थांश्च भूपतीन् दण्डयिष्यति ।
२२ ते स्थाने संग्रहीष्यन्ते गुप्तस्थानामिव बन्धनं ।
बद्धाश्च ते भविष्यन्ति कारायां दृढबन्धनैः ।
आनेष्यन्ते विचारं ते त्वनेकदिनतः परं ।
२३ चन्द्रमाश्च विवर्णत्वं रविः लज्जां गमिष्यति ।
सैन्याध्यक्षपरेशो यत् स्वमहिमा सियोणगिरौ ।
यिरूशालमि राजत्वं प्राचां साक्षात् करिष्यति ॥

## २५ पञ्चविंशोऽध्यायः ।

१ अथात् परमेश्वरस्य प्रशंसनं ६ भोजस्य राज्यस्थापनं ९ तदीय मानवानां हर्षश्च ।

१ हे परेश त्वमीशो मे त्वत् प्रतिष्ठां करोम्यहं ।
त्वदीयनामधेयस्य करिष्यामि प्रशंसनं ।
कर्म्माण्याश्चर्य्यरूपाणि प्रकृतानि यतस्त्वया ।
पूर्व्वं निरूपितं वाक्यमचलञ्च भवेद्धृतं ।
२ अकारि नगरं राशिः सुराभिश्च दृढं पुरं ।
तच्चस्वर्गिर्व्विलोकानाम् अट्टालिका समस्तजो ।
कृता त्वया पुनर्नो सा भविष्यति सुनिर्म्मिता ।

३ अतो ये बलवल्लोकास्ते कुर्व्वन्ति तव स्तवं ।
ये भयानकदेशीयास्ते त्वत् भीतिं प्रकुर्व्वते ।
४ यतस्त्वं दीनलोकानाम् अभव आश्रयोपमः ।
विपदि त्वं दरिद्राणाम् अभव आश्रयोपमः ।
भित्तौ भयङ्कराणाञ्च कोपे झञ्भ्रास्वरूपके ।
रौद्रे छायास्वरूपश्च झञ्झाकाले लमाश्रयः ।
५ शुष्कदेशे यथा तृष्णा ग्रीष्मो ह्रासं प्रगच्छति ।
तथाहङ्कारिलोकानां गर्जनं दमितं त्वया ।
छायया घनमेघस्य ग्रीष्मो ह्रासं व्रजेद् यथा ।
तथा भयङ्कराणाञ्च जयशब्दो न्यवर्त्तत ॥
६ सैन्याध्यक्षपरेशो ऽस्मिन् गिरौ सर्व्वनृणां कृते ।
भक्ष्यमुत्तमद्रव्यञ्च पुराणं गोस्तनीरसं ।
अति सुस्वादुद्रव्यञ्च मेदोयुक्तं पुरातनैः ।
स्वच्छद्राक्षारसैर्युक्तं भोज्यमासादयिष्यति ।
७ सर्व्वलोकमुखेष्वास्ते यदेवाच्छादनाम्बरं ।
यत् प्रच्छादनमास्ते च वक्षेषु सर्व्वदेशिनां ।
नाशयिष्यति तत् सर्व्वम् एतस्मिन्नेव पर्व्वते ।
८ मृत्युं निर्जित्य तेनैव ग्रसनं प्रकरिष्यते ।
प्रभुः परेशितास्येभ्यो नेत्रतोयं प्रमार्क्ष्यति ।
सर्व्वस्मातो ऽपमानानि स्वनृणां दूरयिष्यति ।

इयं कथा परेशेन स्वयमेव प्रभाषिता ॥

९ तदानीं ते वदिष्यन्ति पश्य न एष ईश्वरः।

अयं प्रतीक्ष्यते ऽस्माभिरस्मान् संत्रातवानयं ।

एष प्रतीक्ष्यते ऽस्माभिरेष एव परेश्वरः।

अनेन यत् परित्राणम् अस्माकं विहितं पुरा ।

तेनानन्दं करिष्यामः करिष्यामो जयध्वनिं।

१० यतस्तु परमेशस्य स्वकीयं यत् करद्वयं।

विश्रामो दास्यते ऽस्मभ्यम् एतस्मिन्नेव पर्व्वते ।

यथा नालं सारकुण्डे चरणाभ्यां विदल्यते ।

तथा मोयाबिलोकस्तु पतत्नेन दलिष्यते ।

११ तरणार्थं यथा मग्नो वितनोति निजौ करौ ।

तथा स तस्य मध्येपि स्वकरौ वितनिष्यति ।

किन्त्वीशेन तदीयेन सार्द्धं हस्तछलेन च ।

अभिमानस्तदीयस्तु नितरां दमयिष्यते ।

१२ भंक्ता तस्य दृढां भित्तिं प्राचीरमुन्नतञ्च सः ।

मृत्तिकायामवारोह्य ते धूलौ पातयिष्यति ॥

२६ षड्विंशोऽध्यायः ।

१ प्रभुदंघहेतोः परमेश्वरस्य प्रशंसनम् १९ परमेश्वरे लोकलोकानाम् आश्रयश्च ।

१ तदैतद् गास्यते गीतं यिहूदादेशमानवैः ।

आस्माकीनं प्रविश्येत नगरं बलसंयुतम्।
तचेशो ऽस्थापयत्साघं प्राचीरं दृढभित्तिकाम्।
२ युष्माभिः सकलैरेव क्रियतां द्वारमोचनं।
तेन सत्यत्वसंयक्ता धर्म्मजातिः प्रवेक्ष्यति।
३ भूत्वाचलाश्रयस्त्वं ताम् चेमेण स्थापयिष्यसि।
यतस्ते मानवाः सर्व्वे संभवन्ति त्वदाश्रिताः।
४ यूयं सर्व्वेपि सततम् आश्रयध्वम् परेश्वरम्।
यतो यः नामके ऽनन्त आश्रयोस्ति परेश्वरं।
५ तथाधःपातितास्तेन प्रोच्चस्थाननिवासिनः।
अत्युच्चनगरं तेन व्यधायि नतमेव च।
मृत्तिकायाः समानं तद् व्यधायि भूमिसाद्पि।
६ लोकानां चरणा अर्थात् दीनानां चरणव्रजः।
पादक्षेपो दरिद्राणां दलितं तत् करोति च।
७ धार्म्मिकानाम् ऋजुर्मार्गः समानं त्वं करोषि तं।
८ हे परेश्वर मार्गे तु त्वदीये विधिरूपके।
तवैव च प्रतीक्षापि कृतास्माभि र्निरन्तरं।
त्वदीयं धन्यवादञ्च प्रकर्त्तुं स्मरणं तव।
अस्माकमेव सर्व्वेषाम् अभिलाषोपि विद्यते।
९ यामिन्यां मनसा सार्द्धं मया त्वमभिवाञ्छितः।
प्रातःकाले ऽन्तरस्थेनात्मना स्वेन गवेषितः।

यतो धरणिमध्ये ते शासने संप्रकाशिते ।
शिक्षिष्यन्ते जगद्वासा मानुषा धर्म्मकर्म्म च ।
१० प्राप्तोप्यनुग्रहं पापी धर्म्मं कर्त्तुं न शिक्षते ।
देशेपि सरलताचार आचरिष्यति वैकृतम् ।
महिम्नि परमेशस्य मनो नैव निधास्यति ।
११ हे परमेश्वर हस्तौ द्वौ त्वदीयौ यौ समुत्थितौ ।
परिद्रष्टुं प्रवाञ्छन्ति मानुषा नहि तौ करौ ।
किन्तु स्वकीयलोकार्थं त्वदीय उद्यमोस्ति यः ।
मनुष्यास्तं समालोक्य तं प्रयास्यन्त्यपत्रपां ।
परिधक्ष्यति तान् वह्नि स्त्वदीयरिपुनाशकः ।
१२ अस्मत्कृते परेश त्वम् क्षेममासादयिष्यसि ।
यतोऽस्मत् सर्व्वकर्म्माणि त्वमस्मभ्यं करोषि च ।
१३ अस्मत् प्रभो परेशान्यैः प्रभुभिः शासिता वयं ।
इदानीं केवलं त्वां ते ऽनुग्रहात् संस्तुमो वयं ।
१४ पञ्चत्वप्राप्तलोका ये जीविष्यन्ति पुन र्न ते ।
उत्थास्यन्ति पुन र्नैव ये प्रेता मानुषास्तु ते ।
यतस्तेभ्यः फलं दत्वा ताल्लोकान् त्वमनाशयः ।
तेषां स्मरणवाक्यानां लोपनं कृतवानपि ।
१५ हे परमेश्वर देशीया एधयाञ्चक्रिरे त्वया ।
एधयित्वा च देशीयान् महिम्ना त्वं युतो भवः ।

तथा त्वमेव देशस्य सीमानं पर्य्यवर्द्धयः ॥

१६ हे परेश वयं दुःखे त्वामेवान्वगयामहि।

तथास्मान् प्रति ते शास्तौ वयं संव्यनयामहि।

१७ सूतिकाले समायाते नारी गर्भवती यथा।

दुःखिता व्यथिता भूत्वा काकूक्तिं कुरुते भृशं।

परेश ते विदूरस्थाः प्राभवाम वयं तथा।

१८ गर्भवन्तो वयं भूत्वाभवाम व्यथिता अपि।

किंत्वस्माभिः समीरोहि केवलः समसूयत।

देशे ऽस्माकं परित्राणं नह्यगच्छत् प्रसिद्धतां।

जगन्निवासिनो लोका अधः पातं गता न च।

१९ त्वदीया मृतलोकास्तु प्रोत्थास्यन्ति सजीवकाः।

मदीयकुनपस्यापि समुत्थानंभविष्यति।

श्मशानवासिनः सर्व्वे गीतं गायत जाग्रतः।

यतस्त्वदीयनीहारः प्रातर्नीहारतुल्यकः।

निक्षेप्स्यति पुनर्जीवान् प्रमीतमनुजान् क्षितिः।

२० हे मल्लोक समायाहि गृहगर्भञ्च संविश।

यत्पश्चात् संस्थितं द्वारं तस्य रोधं विधाय च।

क्रोधस्य शेषपर्य्यन्तं क्षणमेकं तिरोभव।

२१ यतः पश्य धरायां ये वसन्ति पापिनो जनाः।

तेभ्यः शास्तिं प्रदातुं सः स्वस्थानात् एति सत्वरं।

ततः स्वोपरिसंस्थं मां शोषितं कारयिष्यति।
हतान् स्वीयजनान् सा न पुनराच्छादयिष्यति॥

२७ सप्तविंशतितमोऽध्यायः।

१ परमेश्वरस्य द्राक्षाक्षेत्ररक्षणगीतं ७ तस्य शास्तेरभिप्रायः १२ तस्य राज्यस्य वृद्धिः।

१ तदानीं परमेशेन शातेन दृढतासिना।
गाढेन शीघ्रसंयाने सर्पाय लिवियाथने।
प्रदास्यते स्वयं शास्ति वक्राय लिवियाथने।
तथा सरित्पतिस्थञ्च कुम्भीरं मारयिष्यति।
२ युष्माभिः समये तस्मिन्नन्द्राक्षीयवप्रकं।
समुद्दिश्योत्तरं गीतं प्रतिवाक्यञ्च गीयतां।
३ अहं परेशिता तस्य भवामि परिरक्षिता।
तस्मिन् प्रतिनिमेषञ्च करोमि तोयसेचनं।
मनुष्याणां यथा कोपि कुर्व्वीत तस्य न क्षतिं।
तन्निमित्तं दिवारात्रं तस्य रक्षां करोम्यहं।
४ तेनैव मामकोनस्य प्रतिघो नहि विद्यते।
कोलिश्च कण्टकं कश्चित् संस्टजाति यदि क्वचित्।
तदाहं तं समाक्रम्य दाहयिष्यामि चैकदा।
५ वत वरं स मामेव शरणं परिगच्छतु।
मिलेत् मयैव सार्द्धं स मया सार्द्धं मिलेच्च सः।

६ ततो याकूबस्तु विन्यस्य कां दृढं धास्यन्ति मानवाः।
इस्रायेलीयवंशश्च प्रफुल्लपल्लवान्वितः।
फलेन मेदिनीं सर्व्वां परिपूर्णां करिष्यति॥
७ तस्य ताडकलोकं स परिताडितवान् यथा
तथा किं तस्य लोकस्य कृतवान् परिताडनं।
स तेषां हतलोकानामिव किं हतवानमुन्।
८ मितमात्या बहिष्कृत्य स तेन विवदिष्यते।
यदा पुरस्ताज्जन्या स्यात् प्रबलेन नभस्वता।
तस्मिन्नेव दिने तेन मनुजः सोऽपसारितः।
९ कलुषं तेन याकूबः संभविष्यति मार्जितं।
पापमोचनजं सर्व्वं फलं स समवाप्स्यति।
कृचाकारस्य चूर्णस्य पाषाणमिव सर्व्वशः।
यज्ञवेद्याः शिलाः सर्व्वाः स एव विकरिष्यति।
चैत्योद्यानं रवे मूर्त्तिश्चोत्थास्यति पुन र्नहि।
१० यास्यत्युच्छिन्नतामेव नगरं सुदृढीकृतं।
वासशून्यं जनै र्हीनम् अटव्येव भविष्यति।
चरिष्यन्ति वृषा स्तत्र शयिष्यन्ते च तत्र ते।
तत्र च शाखिनां शाखाः खादिष्यन्ति सपल्लवाः।
११ तथा सतीषु शाखासु शुष्कास्वेष्यन्ति भग्नतां।
योषितश्च समागत्य ताः सर्व्वा दाहयिष्यन्ति।

अवश्यं मनुजा एते ज्ञानहीना भवन्ति च ।
एतस्मात् कारणादेषां सृष्टिकर्त्तापि तान् प्रति ।
करिष्यति कृपां तेषां नहि निर्म्माणकार्य्यपि ।
प्रति तान् मानुषान् नैवानुग्रहञ्च करिष्यति ॥

१२ तदानीं परमेशेन फरात्नीपप्रवाहतः ।
मिसरीयनिम्नगां यावत् फलं प्रतिपतिष्यते ।
इस्रायेलवंश युष्मान् स एकैकं संग्रहीष्यति ।

१३ तस्मिन् काले बृहत्तूर्य्यं वादयिष्यन्ति मानवाः ।
मृतकल्पा अशूरदेशात् विकीर्णा मिसरे तथा ।
बहुलोकाः समागत्य पवित्रेऽस्मिन् शिलोच्चये ।
अर्थादाराधयिष्यन्ति परेशं यिरुशालमि ॥

## २८ अष्टाविंशोऽध्यायः ।

१ इस्रायेलो भविष्यद्दण्डः ५ लोकानां भ्रान्तिः १४ सत्यभित्तेः स्थापनं कथाविशेषे विश्वासनं २३ विवेकं शिक्षणञ्च ।

१ धिगिफ्रयिंस्थमत्तानां गर्व्वरूपं किरीटकं ।
द्राक्षारसेन मत्तानां योपत्यका फलै युता ।
तच्छीर्षसुन्दरोष्णीषे पुष्पं म्लानिं प्रयास्यति ।
पश्य प्रभोः प्रभावाढ्यो बलवको महाबलः ।

२ झञ्झा यथा शिलायुक्ता यथा झञ्झा विनाशिनी ।
महाजवात् प्रधावच्च तोयमाप्लावकं यथा ।

स्वकीयेन बलेनैव प्रनिक्षेप्स्यति तं क्षितौ ।
३ तेनेफ्रयिमप्रमत्तानां गर्व्वरूपं किरीटकं ।
चरणयोस्तलेनैव दलितं संभविष्यति ।
तेषामेव मनुष्याणां योपत्यका फलै र्युता ।
तच्छीर्षसुन्दरोष्णीषे पुष्पं म्लानीभविष्यति ।
४ उडुम्बरं फलं यत्तु ग्रीष्मात् प्रागग्रमकालिकं ।
दृष्टमात्रं मनुष्येण संक्रियेत तथा करैः ।
गृहीतमात्रं ग्रस्येत तद्वदेव भविष्यति ॥
५ तद्दावग्निष्टलोकानां सैन्याध्यक्षः परेश्वरः ।
भविता मुकुटं चारु तेजस्विमुकुटं तथा ।
६ विचारार्थोपविष्टानां नृणां न्यायविचारवत् ।
तथा ये द्वारपर्य्यन्तं समीकं निजवैरिणाम् ।
प्रापयन्ति परावृत्तं बलं तेषां भविष्यति ।
७ किन्त्विमे भ्रान्ततां याता गोस्तनारससेवनैः ।
तथैव मदिरापानैः स्खलनञ्चापि संगताः ।
सुरापानेन संभ्रान्ता भाविवादिपुरोधसः ।
ते जना अभवन् मग्ना गोस्तनीरससेवनात् ।
दोलायिताश्च ते लोका मदिराणां प्रपानतः ।
भविष्यद्वाक्यकथने ते जना भ्रान्ततां गताः ।
स्खलितत्वं परिप्राप्ता मनुष्याणां विचारणे ।

८ वाक्येन विद्यया वापि पूर्णं सकलमासनम्।
किञ्चित् स्थानं न कुत्रापि विद्यते सुपरिष्कृतं।
९ स कस्मै दास्यति ज्ञानं कस्मै बुद्धिञ्च दास्यति।
यैस्तु दुग्धं परित्यक्तं निवृत्तं स्तन्यपानतः।
तदाले: सदृशा ये स्यु स्तानेव मानुषान् किमु।
१० निदेशोर्द्धं निदेशो यत् निदेशोर्द्धं निदेशनं।
पंक्तेरुपरि पंक्तिश्च पंक्तेरुपरि पंक्तिका।
अत्र स्थाने ऽल्पकं तत्र स्थाने चाल्पं प्रविद्यते।
११ अव्यक्तवचसोष्ठेन विदेशभाषया तथा।
सार्द्धमेतै र्मनुष्यैश्च स संलापं करिष्यति।
१२ यदेष आस्ते विश्रामः क्लान्तान् विश्रामयस्व च।
सुखमेतत् कथामेतां सम्यक् प्रकथितामपि।
संश्रोतुं मानुषा स्ते नो निच्छन्ते मनो निजं।
१३ अतस्तेषां पुरो यानं पश्चात् पतनभञ्जने।
उन्मथे पतनञ्चैव तथा धारणकारणात्।
तान् मनुष्यान् समुद्दिश्य भाषणं परमेशितुः।
निदेशोर्द्धं निदेशश्च निदेशोर्द्धं निदेशनम्।
पंक्तेरुपरि पंक्तिश्च पंक्तेरुपरि पंक्तिका।
अस्मिन्नल्पञ्च तत्रापि स्थाने चाल्पं भविष्यति॥
१४ हे निन्दकजना यूयं हे यिरूशालमि स्थिताः।

शासकाः परमेशस्य निशामयत भारतीम्।
१५ नियमो मृत्युना सार्द्धं परलोकेन निर्णयः।
विहितो ऽस्माभिरित्येतद् युष्माभिः परिचक्ष्यते।
सर्व्वंच गामिनी मारी वर्त्तमानेन यायिनी।
अपि नैव कदाप्येषास्माकं स्पर्शं करिष्यति।
यतो ऽस्माभि र्मृषावाक्यैः संश्रयः समकारि हि।
तथा धूर्त्ततयास्माभिः स्वेषामाच्छादनं कृतं।
१६ अतः प्रभुपरेशेन वाक्यमेतदुदीर्य्यते।
पश्यत भित्तिमूलार्थं एकएव हि प्रस्तरः।
अर्थात् परीक्षितः कोणे संस्थितो बहुमूल्यकः।
अतिगाढस्य पायस्य : सियोनि स्थापितो मया।
विश्वसिष्यति यस्तच स जनो न चपिष्यते।
१७ मया च विधिना रज्ज्वा परिमाणं करिष्यते।
धर्म्मोल्लम्बसूत्रेण परिमाणं करिष्यते।
मिथ्याश्रयं शिलावृष्टिः परिमृष्टं करिष्यति। •
सलिलं गोपनस्थानं भग्नमेव करिष्यति।
१८ तथा भंक्ष्यति युष्माकं नियमं मृत्युना सह।
न स्थास्यति च युष्माकं प्रेतेन सह निर्णयः।
या मारी सर्व्वगा सा चेद् युष्मन्निकटवर्त्तिनी।
तर्हि यूयं हि तेनैव दलिताः संभविष्यथ।

१९ सैव गमनमात्रेण युष्मान् सर्व्वान् धरिष्यति।
प्रभाते प्रभाते यास्यति युष्माकं मध्ये प्रतिदिवानिशं।
तद्वार्त्ताप्राप्तमात्राद्धि यूयं क्लिष्टा भविष्यथ।
२० विस्तार्य्य शयनं कर्त्तुं खट्टा ह्रस्वा भविष्यति।
खट्टावस्त्रञ्च वसितुं गात्रं क्षुद्रं भविष्यति।
२१ परेश्वरस्तथोत्थाता पिरासीमि गिरौ यथा।
गिवियोन् सन्निधौ यद्वत् तद्वत् क्रुद्धो भविष्यति।
तेन स्वीयाद्भुतं कार्य्यं स प्रसिद्धं करिष्यति।
२२ अतो यथा न युष्माकं शास्तिः संजायते ऽधिका।
तन्निमित्तं प्रवर्त्तध्वं निन्दां कर्त्तुं पुन र्नहि।
यतोधि सकलान् देशान् सैन्याध्यक्षात् परेश्वरात्।
परिस्थिरीकृतं वाक्यं विनाशस्य श्रुतं मया॥
२३ कर्णाभ्यां शृणु मद्वाक्यं गृहाण मनसा च तत्।
२४ दिने दिने कर्षणानि कृत्वा कृत्वा कृषीवलः।
लोष्ट्रानां कर्त्तनञ्चैव कृत्वा कृत्वा च वप्रके।
भंक्त्वा भंक्त्वा च लोष्ट्राणि बीजवापं करोति किं।
२५ स भूमुखसमं कृत्वा तिलान् किं विकिरेन्नहि।
सएव जीरकानां किं वपनं न करोति हि।
उपयुक्तप्रमाणान् किं गोधूमान् तु वपेत् न सः।
यवान् निरूपिते स्थाने कलायान् किं वपेत् न सः।

२६ यतस्तदीश्वरो न्याय्यं शिक्षयेत् ज्ञापयेच्च तं ।
२७ संमर्द्यन्ते कराहृष्टशकटेन तिला नहि ।
तथा शकटचक्रं न घूर्णते जीरकोपरि ।
तिला दण्डेन मर्द्यन्ते जीरका मुद्गरेण च ।
२८ जायते ऽलोभरादेव पूपशस्यस्य मर्द्दनं ।
किन्तु मर्द्दयितुं तत स चक्रेण पीडनाय च ।
पशोः खुरैश्च चूर्णार्थं वर्त्तिष्यते चिरं न यः ।
२९ एतच्च परिज्ञायेत सैन्याध्यक्षपरेश्वरात् ।
मन्त्रणायां स आश्चर्य्यो महान् कार्य्यकृतौ च सः ॥

## २९ ऊनत्रिंशोऽध्यायः ।

१ यिरूशालमो भविष्यद् दुःखः ९ लोकानामज्ञानत्वं १५ लोकानां कुट्टत्वं १८ साधुलोकानां सुखम् ।

१ अरीयेल् नगरे यस्मिन् दायूद् राजोऽवसत्पुरा ।
तस्यारीयेलपुरस्यैव सन्तापः संभविष्यति ।
२ गणिते बहुवर्षेऽपि पालिते च बहूत्सवे ।
घटयिष्याम्यहं दुःखम् अरीयेल्नगरं प्रति ।
तेन तेषान्तु शोकस्य क्रन्दनञ्च भविष्यति ।
अरीयेल् सदृशोभावो मम दृष्टौ तथापि सः ।
३ मया तस्य चतुर्द्दिक्षु शिविरः स्थापयिष्यते ।
रक्षिटभि र्मनुष्यैश्च तदेव वेष्टयिष्यते ।

अवरोधकयन्त्रञ्च तत्पार्श्वे रचयिष्यते।
४ तेनैव नगरं तद्धि न्यक्पातं परियास्यति।
तथा मृदि च संस्थाय वचनं संवदिष्यति।
धूलीनां मध्यतो धीरं वच उच्चारयिष्यति।
निर्यास्यति स्वरस्तस्य भूतवत् धूलिमध्यतः।
तद्वाक्यकलशब्दश्च धूलिमध्याद् भविष्यति।
५ किन्तु तस्य भविष्यन्ति रिपवः सूक्ष्मधूलिवत्।
कडङ्गरा यथोड्डीना भविष्यन्ति भयानकाः।
अहङ्कारिमनुष्याश्च संभविष्यन्ति तादृशाः।
इदं हठादकस्माच्च निश्चितं संघटिष्यते।
६ सैन्याध्यक्षपरेशेन तानेव मानुषान् प्रति।
गर्ज्जनं भूमिकम्पश्च कठोरः शब्दएव च।
वातवृष्टिस्तथा झञ्झा दाहिकाग्निशिखापि च।
एतानि सकलान्येव भविष्यन्ति फलानि वै।
७ सार्द्धं युद्धान्यरीयेला येऽन्यदेशीयमानुषाः।
तस्य दुर्गाय युद्धान्तः क्लेशमुत्पादयन्ति ये।
ते स्वप्नवत् भविष्यन्ति निशायाः स्वप्नवत् तथा।
८ बुभुक्षिता यथा लोकाः स्वप्ने कृत्वापि भोजनं।
ततो जागरिता तृप्तेरुपलब्धिं न यान्ति ते।
पिपासितास्च तोयानि स्वप्नकाले पिवन्ति ये।

भवन्ति दुर्ब्बला एव आयतस्तेऽपि मानवाः
पुनस्ते मानुषाः पातुम् वाञ्छां कुर्व्वन्ति निश्चितं।
सियोनश्शैलविरोधेन ये ये युध्यन्ति मानवाः।
भविष्यति गतिस्तेषां तादृशी सर्व्वदेशिनां॥
९ चमत्कारं गता यूयं स्तब्धा मुग्धा भविष्यथ।
परस्परं समालोक्य दृष्टिहीना भविष्यथ।
यूयं घूर्णथ मत्ताश्च न द्राक्षारसपानतः।
प्रस्खलिष्यथ यूयञ्च मदिरापानतो न तु।
१० परेशो घोरनिद्रायां युष्मान् मग्नान् करिष्यति।
भविष्यद्वादिनेत्राणि युष्माकं मुद्रयिष्यति।
प्रदर्शकोत्तमाङ्गन्तु च्छादितं प्रकरिष्यति।
११ सकलान्येव वाक्यानि युष्मत् सर्व्वजनान् प्रति।
मुद्राक्षराङ्कितस्यैकं पुस्तकं संभविष्यति।
कश्चिद् ज्ञाताक्षरं दत्त्वा चेद् विनीय वदेदिति।
पठ पुस्तकमेतत् त्वं तदा स प्रतिवक्ष्यति।
१२ शक्नोमि पठितुं नाहं मुद्राङ्कितमिदं यतः।
अज्ञाताक्षरलोकं वा दत्त्वैतद् विनयाद् वदेत्।
पठ पुस्तकमेतत् त्वं स तदा प्रतिवक्ष्यति।
पठितुं नाभिजानामि पुस्तकं किञ्चिदप्यहं।
१३ परेशः कथयेदेतद् एते लोका निजै मुखैः।

मदीयसन्निधानाय करिष्यन्ति समागमं।
तथाधरै मदीयञ्च मानं कुर्व्वन्ति ते नराः।
किन्तु तेषां मनो मत्तो विदूरएव तिष्ठति।
मत्तो तेषां भयं नृणां विधिभिः परिशिक्ष्यते।
१४ अतः पश्य पुनस्तैतैः सहितो मानुषैरहम्।
व्यवहारं करिष्यामि चाश्चर्य्यञ्च चमत्कृतं।
तेन ज्ञानवतां तेषां ज्ञानञ्च परिनंक्ष्यति।
तया बुद्धिमतां तेषां बुद्धिलोपो भविष्यति॥
१५ बोधागम्यां गभीराञ्च गुप्ताञ्च परमेश्वरात्।
ये मनुष्याः समीहन्ते परिकर्त्तुं सुमन्त्रणां।
तिमिरे कर्म्म कृत्वापि कोऽस्मान् पश्यति वेत्ति कः।
इति ब्रुवन्ति तेषान्तु परीतापो भविष्यति।
१६ वातुलत्वं परिप्राप्ता यूयन्तु मृत्तिका यथा।
तथैव कुम्भकारः किं परिगण्यो भविष्यति।
किं मां त्वं सृष्टवान् नेति सृष्टं स्रष्टारमावदेत्।
तव नोऽविद्यते ज्ञानं इति निर्म्मितवस्तु च।
स्वीयनिर्म्माणकर्त्तारं प्रकोति वदितुं वचः।
१७ उद्यानवत् लिबानोन् किं स्वल्पकालाद्भविष्यति।
काननञ्च समं मान्यं किमुद्यानं भविष्यति॥
१८ धर्म्मपुस्तकवाक्यानि श्रोष्यन्ति बधिरास्तदा।

अन्धनेत्राणि वीचन्ते ध्वान्ते च तिमिरे गते ।
१९ आनन्दं वर्द्धयिष्यन्ति नम्राः स्वे स्वे परेश्वरे ।
इस्रायेल् धर्म्मरूपे च प्रोल्लसिष्यन्ति दुर्गताः ।
२० यतो भयानका लोकाः स्थास्यन्ति न पुन र्भुवि ।
२१ उच्छिद्यन्ते च निन्दका आसक्ताश्च कुकर्म्मणि ।
वाक्यैकार्थं मनुष्यं ये जना जानन्ति दोषिणं ।
विचारे भर्त्सनाकर्त्रे उन्माथं योजयन्ति ये ।
धार्म्मिकं दुरवस्थायां मृषोक्त्या पातयन्ति ये ।
समुच्छिन्ना भविष्यन्ति सर्व्वैतादृशा नराः ।
२२ इब्राहीममुक्तिदाता यः स एव परमेश्वरः ।
याकूब्वंशं प्रतीत्येतद् वचनं प्रतिभाषते ।
न यास्यति ह्रियं याकूब् नास्यं म्लानीभविष्यति ।
२३ यतस्तदीयसन्तानाः स्वकीयमध्यतो यदा ।
दर्शनं समवाप्स्यन्ति मत्करकृतकर्म्मणां ।
तदानीं प्रकरिष्यन्ति पवित्रं मम नाम ते । •
पवित्रं परिमंस्यन्ते याकूबो धर्म्मरूपकम् ।
इस्रायेलीश्वरात्त्वाच ते प्राप्स्यन्ति प्रकम्पनं ।
२४ मनोभ्रान्तमनुष्याश्च भोत्स्यन्ते ज्ञानजं वचः ।
शिचिष्यन्त्युपदेशीयां कथां कलहकारिणः ॥

---

## ३० त्रिंशत्तमोऽध्यायः।

१ उपकारार्थं मिसरमागतान् लोकानां भविष्यद्दुःखः ८ ईश्वरीयकथाया अवज्ञानस्य फलं १८ ईश्वरीयानुग्रहस्य वर्णनं २७ अशूरीयस्य राज्ञो विनाशश्च।

१ परेशः कथयेदेतत् अबाध्या बालका इमे।
विना मदीयंसाहाय्यं कुर्व्वन्ति बहुमन्त्रणाम्।
पापस्योपरि पापस्य करणाय ममात्मनः।
सहायत्वं परित्यज्य नियमं निर्णयन्ति च।
२ अपृष्ट्वा मां फिरौणस्य बलेन बलिनस्तथा।
श्रयितुं मिसरच्छायां मिसरं प्रति यान्ति च।
तेषां सर्व्वमनुष्याणां परीतापो भविष्यति।
३ फिरौणो भूमिपालस्यावश्यमेव पराक्रमः।
सर्व्वेषामपि युष्माकं त्रपारूपो भविष्यति।
मिसरच्छायाश्रिता यूयं व्याकुलाः संभविष्यथ।
४ युष्मदध्यक्षसंघेन सोयनि समुपागते।
दूतानां निवहे चैव हानेषि समुपस्थिते।
ये युष्मदुपकारी न नोपकारश्च ये हितं।
५ संहत्य केवलं ब्रीडाश्चापयन्त्यपमानितां।
एतादृशेषु लोकेषु त्रपां सर्व्वे प्रयास्यथ।

दक्षिणदिग्वासिनां पशूनां भाविवचनं।

६ यद्दुःखक्लेशयुक्तात् देशात् सिंही सिंहश्च दुर्जयौ।

[illegible]: समायान्ति प्रोष्ठीयानश्च गूढपात्।
[illegible] च [illegible] तान् तद्देशस्य ये जनाः।
ते तु तेषां समीपाय वाहयन्ति धनं खरान्।
वाहयन्ति च सम्पत्तिं पृष्ठभागे मयानपि।
७ उपकारो वृथा तस्य वाल्लरूपो यतोमिसर्।
अतस्तमधि मे भूतं सो ऽलसो दम्भवानपि॥
८ एषा कथा यथा तिष्ठेत् यावच्च भाव्यनेहसं।
चिरकालान् यथा चैषा साक्षिरूपेण तिष्ठति।
एतत्कृते त्वया गत्वा तेषां नृणां समक्षतः।
पट्टकोपरि लिख्येत मुद्र्यतां तच्च पुस्तके।
९ एते लोका यतो दुष्टा मिथ्यावंशसमुद्भवाः।
न च श्रोतुं समीहन्ते व्यवस्थां पारमेश्वरीं।
१० ते पश्यतो वदन्तीति युष्माभि र्नैव वीक्ष्यतां।
इत्यञ्च प्रतिभाषन्ते ते जना भाविवादिनः।
भाविवाक्यन्तु यत् सत्यं तन्न यूयं प्रकाश्य च।
स्निग्धं भ्रान्तिप्रदं यत्स्याद् ब्रूतास्मान् तादृश वचः।
११ सत्पथात् परिवर्त्तध्वम् ऋजुवर्त्म जहीत च।
इस्रायेल् धर्म्मरूपञ्च दूरयत समक्षतः।
१२ अतएव वदेदीश इस्रायेल्धर्म्मरूपकः।
इयमुक्ति र्मदीयातु युष्माभिरवमानिता।

इयं कुटिलतायाञ्च निर्भरात्मने कृते ।

१३ उच्चभित्तेरपध्वंसः पतितुं हि समुद्यतः ।
यथैकदा हठादेव न्यक्पातं परिगच्छति ।
पापेनानेन युष्माकं तथैव संभविष्यति ।

१४ यथा कश्चित् कुलालस्य भनक्ति भाजनानि हि ।
भंक्तुं किमपि नो तेषां ममत्वं संप्रजायते ।
चुल्लीतो वह्निमुद्धर्तुं कुण्डतो जीवनानि वा ।
अप्येकशकलं नैव खर्परस्य प्रतिष्ठति ।
युष्माकं परिभङ्गेऽपि तथैव प्रभविष्यति ।

१५ इस्रायेल्धर्मेद्रत्याह प्रभुः स परमेश्वरः ।
शान्तिं गत्वा परावृत्य यूयं रक्षामवाप्स्यथ ।
स्थिरीभूय च विश्वस्य शक्तिं यूयमवाप्स्यथ ।

१६ किन्तु यूयं न संमान्य तद्वाक्यं समवोचत ।
नहि तद् वयमाश्रित्य करिष्यामः पलायनम् ।
एतस्मात् कारणाद् यूयं भविष्यथ पलायिताः ।
आरोक्ष्यामो वयञ्चाश्व तुरगान् तूर्णगामिनः ।
शीघ्रगामी जनो युष्मान् अतः सन्ताडयिष्यति ।

१७ एकस्माद् भीतितो लोकाः सहस्रं पश्चतो भयात् ।
युष्माकं सकला एव करिष्यन्ति पलायनं ।
अवशिष्टन्तु युष्माकं परिस्थास्यति स्तम्भकं ।

शैलशृङ्गस्थितः केतु र्यथोच्चगिरिसंस्थितः।
पट्टकाख्यो यथा तद्व भविष्यति न संशयः॥

१८ युष्मान् प्रति दयां कर्त्तुं प्रतीक्षिता परेश्वरः।
युष्माननुग्रहीतुञ्च प्रोत्थास्यति परेश्वरः।
यतएव प्रभुश्चैव न्यायकारी परेश्वरः।
ये जनास्तं प्रतीक्षन्ते तएव धन्यमानवाः।

१९ निवासञ्च करिष्यन्ति सियोनि पर्व्वते जनाः।
यिरूशालमि नो यूयं पुनः क्रन्दं करिष्यथ।
आर्त्तस्वरं स युष्माकं दयां श्रुत्वा करिष्यति।
तस्य श्रवणमात्रेण प्रदास्यति स उत्तरं।

२० दुःखकाले प्रभुः खाद्यं युष्मभ्यं परिदास्यति।
किलालं शोककाले च युष्मभ्यं परिदास्यति।
नहि गुप्ता भविष्यन्ति युष्माकं शिक्षका जनाः।
किन्तु नेत्राणि युष्माकं द्रक्ष्यन्ति शिक्षकान् नरान्।

२१ मार्गोऽयं चलतानेन न यात वामदक्षिणौ।
उपदेशमिमं पश्चात् श्रोष्यन्ति लोचनानि वः।

२२ खखरूप्यीयमूर्त्तिं र्या स्वर्णलिप्ता च मूर्त्तिका।
यूयं संशाश्यतामेध्यं वस्त्रञ्चाभरणं तयोः।
अमेध्यवस्त्रवत् त्यक्त्वा दूरीभवेति वक्ष्यथ।

२३ वप्तुं बीजानि युष्माकं वृष्टिं परिविधाय सः।

भूमौ प्रभूतभक्ष्याणां उत्पत्तिं प्रकरिष्यति ।
चरिष्यन्ति च युष्माकं पशवः पृथुप्रान्तरे ।
२४ ये कर्षका बलीवर्द्दा गर्द्दभा अपि ते सदा ।
प्रखादिष्यन्ति शस्यञ्च सूर्पाद्यैः सुपरिष्कृतं ।
२५ महावधदिने यस्मिन् पतन्ति बलिनो जनाः ।
तदोच्चपर्व्वतश्रेणेषु सर्व्वोपशैल एव च ।
स्रोतश्च स्यदसंगामि वृहत्स्रोतो भविष्यति ।
२६ यदा भग्नानि लोकानां बन्धिष्यति परेश्वरः ।
करिष्यति यदा स्वस्थं स्वप्रहारक्षतं चतं ।
तदा चन्द्रमसो दीप्ति र्मध्याह्नइव भास्करः ।
मध्याह्नकाल सूर्य्यस्य दीप्तिः सप्तगुणाधिका ।
अर्थतः सप्तघस्राणां दीप्तितुल्या भविष्यति ॥
२७ पश्य स्वयं परेशेनागम्यते विप्रकृष्टतः ।
तस्य प्रज्वलितः क्रोध स्तत्शिखा च समुज्ज्वला ।
तदोष्ठौ क्रोधसम्पूर्णौ तज्जिह्वा नाशकाग्निवत् ।
२८ तदात्मा कण्ठपर्य्यन्तम् उच्छलत्प्लावितोयवत् ।
अन्यदेशसमुद्भूता विद्यन्ते ये च मानुषाः ।
स तान् विनाशरूपेण सूर्पेण स्फोटयिष्यति ।
लोकानां वदने भ्रान्तिः कविका संभविष्यति ।
२९ युष्माकं भविता गीतं यथा पाचयरा[illegible]नवत ।

एवं यथा मनुष्यैस्तु परमेश्वरपर्व्वते ।
इस्रायेलोऽद्रिसंयाने यथा वंशी प्रवाद्यते ।
युष्माकं मानसे तद्वत् आनन्दः संभविष्यति ।
३० परेशस्य प्रकोपेन विनाशिन्यग्निकीलया ।
महावृष्ट्या शिलावृष्ट्या वर्त्तिन्या वात्यया तथा ।
तेजस्विनं रवं स्वीयं समन्तात् श्रावयिष्यति ।
स्वकीयस्य करक्षेपं परेशो दर्शयिष्यति ।
३१ उद्यता यष्टिभि र्हन्तुं अशूरीयास्तु ये पुरा ।
घानिष्यन्ते परेशस्य नादेनाशूरमानुषाः ।
स दण्डेन स्वकीयेन ताल्लोकानाहनिष्यति ।
३२ यं तेभ्यः शास्तिदण्डस्य परमेशः प्रदास्यति ।
स यत्र गमनं कुर्य्यात् सहितस्तेन तत्र च ।
मुरजो वल्लकी चैव गमनं प्रकरिष्यतः ।
ते अन्यैः सहितस्तेन महायुद्धं करिष्यते ।
३३ आदौ निरूपिता यस्माद् बहुकाष्ठमयी चिता ।
राज्ञा सा निर्म्मिता तेन कृता गभीरविस्तृता ।
परमेशस्य फूत्कारो य स गन्धकसम्भवं ।
स्रोतो यथा तथा तस्या ज्वलनं प्रकरिष्यति ।

---

## ३१ एकत्रिंशोऽध्यायः ।

१ मिसरि प्रत्याशाकरणात् लोकान् प्रति भर्त्सनं ६ ईश्वरं परावर्त्तितुं विनयकथनम् अशूरीयाणां विनाशकथनञ्च ।

१ मनुजा उपकारार्थं मिसर्देशं प्रयान्ति ये ।
तथैव रथसार्थञ्च विश्वसन्ति तुरङ्गमे ।
स्यन्दनानां प्रभूतत्वात् स्यन्दने विश्वसन्ति च ।
अतीवबलयुक्तत्वात् विश्वसन्ति च सादिषु ।
इस्रायेल् धर्म्मरूपे तु दृष्टिं प्रपातयन्ति न ।
मन्त्रणां नहि ते लोकाः पृच्छन्ति परमेश्वरं ।
अतस्तेषां मनुष्याणां सन्तापः संभविष्यति ।
२ स्वीयज्ञानेन तेषां स दुर्दशां घटयिष्यते ।
स्वकीयं वचनं नैव निष्फलं प्रविधाय सः ।
वंशस्य दुष्टलोकानां तथा दुष्कर्म्मिणां नृणां ।
सहायानां विरुद्धञ्च समुत्थास्यति निश्चितं ।
३ यतो मनुष्या मिस्रीया ईश्वरा न भवन्ति ते ।
मांसमात्रा हयास्तेषां आत्मानः संभवन्ति न ।
यदा परेश्वरो हस्तौ सुविस्तीर्णौ करिष्यति ।
स्खलिष्यन्ति तदा तेषा मनुष्या उपकारिणः ।
उपकृताः पतिष्यन्ति हनिष्यन्ते त एकदा ।
४ इत्येतद् वचनं मह्यं कथितं परमेश्वरेणेता ।

प्रगर्जति पशुं धृत्वा मृगेन्द्रस्तरुणो यथा ।
युगपत् मेषपालेषु तद्विरुद्धं रुवत्स्वपि ।
तेषां शब्दात् यथा नैव स भियं परिगच्छति ।
तेषां कोलाहलाच्चापि च नैव परिशङ्कते ।
सैन्याध्यक्षः परेशोपि सियोन् शैलस्य कारणात् ।
अवरोक्ष्यति युद्धाय स्वकीयगिरिकारणात् ।
५ विस्तार्य्य पक्षिणो पक्षं यथावन्ति स्वशावकान् ।
सैन्याध्यक्षः परेशोपि रचिता यिरूशालमं ।
तदीयरक्षणं कुर्व्वन् तस्योद्धारं करिष्यति ।
विधायकरुणां तस्मिन् तस्य मुक्तिं करिष्यति ॥
६ इस्रायेलीयसन्ताना यूयाभि र्यत्सकाशतः ।
अतीवविमुखीभूतैः प्रति तं परिवृत्यतां ।
७ निजहस्तैः कृतां मूर्त्तिं स्वर्णरूप्यमयीं तदा ।
घृणित्वा पापवस्तूनि क्षेप्स्यन्ति सकला जनाः ।
८ अपूरीयमहीपालो नरखड्गान्यखड्गतः ।
प[ति]ष्यति च खड्गास्यात् उद्यंस्यति पलायितुं ।
व्याकुलाश्च भविष्यन्ति तस्यनेनीतमानुषाः ।
९ स्वाद्रिं प्रति स भीत्या च करिष्यति पलायनं ।
तदीयाध्यक्षलोकाश्च भेष्यन्ति तत्पलायनात् ।

आस्ते सियोनि यस्याग्नि र्चुल्ली च यिरूशालमि।
तेनैव परमेशेन वचएतदुदीर्य्यते॥

३२ द्वात्रिंशोऽध्यायः।

१ ख्रीष्टीयराज्यस्य मङ्गलकथनं ९ देशस्याधः पतनं पुनरुन्नतिश्च।

१ पश्य धर्म्मेण राजैको राजत्वं प्रकरिष्यति।
अध्यक्षाणां गणो न्यायात् शासनं सुकरिष्यति।
२ झञ्झाकाले यथाच्छादो झञ्झावृष्टौ यथाश्रयः।
शुष्कस्थाने जलस्रोतो यथा मरीचिकाभुवि।
महापर्व्वतसंच्छाया भविता स पुमांस्तथा।
३ तेन दर्शकनेत्राणि न यास्यन्त्यप्रसन्नतां।
मनोयुक्ता भविष्यन्ति श्रोतॄणां श्रुतयस्तदा।
४ अविवेचकलोकानां मनो ज्ञानमवाप्स्यति।
स्खलद्वाक्यस्य जिह्वा च स्पष्टं वाक्यं वदिष्यति।
५ किन्तु मूर्खो न संमान्यो भविष्यति प्रधानवत्।
कृपणो दातृनाम्ना च न विख्यातो भविष्यति।
६ यतो वारयितुं मूर्ख आहारं क्षुधितस्य तः।
पिपासतः किलालञ्च मूर्खताया वचो वदेत्।
कापट्यं तन्मनः कृत्वा विरुद्धं परमेशितुः।
पाषण्डताञ्च कृत्वा स अधर्म्मं परिकल्पते।
७ कृपणस्य क्रिया दुष्टा स नम्रमानसान् जनान्।

मृषाजालेन संवद्धं दरिद्राणां नृणां कथा ।
विचारादन्यथा कर्त्तुं हिंसां मनसि कल्पते ।
८ किन्तु दाता जनो यः स दातृत्वं परिकल्पते ।
स्वयं स्थैर्य्यञ्च संयाति स्वीयदातृत्वकल्पनात् ॥
९ निरुद्विग्नस्त्रियो यूयं वचो मे शृणुतोत्थिताः ।
कन्यागणा विपत्शून्या मद्वाक्ये दत्त मानसं ।
१० हे योषितो विपत्शून्या यावदब्दाननेकशः ।
संस्थास्यथ समुद्विग्ना यूयं सर्व्वा न संशयः ।
यतो द्राक्षाफलस्यैवाभावः परिभविष्यति ।
फलानां शातनस्यापि समयो न भविष्यति ।
११ हे योषितो निरुद्विग्ना यूयं भवत कम्पिताः ।
हे योषितो विपत्शून्याः समुद्विजत सर्व्वथा ।
यूयं वस्त्राणि निर्मुच्य नग्ना भवत सर्व्वतः ।
तथैव कटिदेशेषु शाणवस्त्राणि धत्त च ।
१२ क्षेत्राणाम् उत्तमानाञ्च स्तनानाञ्च कृते तथा ।
फलवद्गोस्तनीनाञ्च कृते कुरुत रोदनं ।
१३ भूमौ मदीयलोकानां सर्व्वानन्दकृतां गृहे ।
वर्त्स्यते प्रोल्लसत्पुर्य्यां कण्टकं कोलिकण्टकं ।
१४ भविष्यन्ति परित्यक्ताः प्रासादाः सकला अपि ।
नगरं मानुषैः पूर्णं नरशून्यं भविष्यति ।

श्राफेलो रक्षिणो दुर्गं पशुग्रासो भविष्यति।
वन्यानां गर्द्दभानाञ्चानन्दस्थानं भविष्यति।
भविता पशुवर्गस्य चरणस्थानमेव च।
१५ तथा सत्यवद्वात्मास्मास्वावेशं करिष्यति।
प्रान्तरं फलसंयुक्तः केदारः सभविष्यति।
१६ विख्यातं फलवत् क्षेत्रं भविष्यति च काननं।
अरण्ये वत्स्यति न्यायो धर्म्मः सफलक्षेत्रके।
१७ शान्ति धर्म्मस्य कार्य्यञ्च भावि धर्म्मफलं तथा।
सर्व्वकाले निरापच्च विश्रामश्च भविष्यति।
१८ शिलावर्षणतोऽरण्ये न्यक् पातं प्रतिगच्छति।
१९ नगरे समभूमौ च निर्व्विरोधे जना मम।
निरापदि निवासे च वत्स्यन्ति निर्भयालये।
२० सतोयभुवि बीजानि प्रवप्तुं कर्षणाय च।
वृषाणां गर्द्दभानाञ्च प्रेषणं ये प्रकुर्व्वथ।
सर्व्वे सुकृतिनो यूयं तएव संभविष्यथ॥

## २२ द्वाविंशोऽध्यायः।

यिरूशालमो भविष्यद्दुःखं १२ शाबुशाकान् प्रति कथा च।

१ उपद्रुतो न भूत्वापि करोषि त्वमुपद्रवम्।
क्षोठितो नहि भूत्वापि त्वं करोषि च क्षोठनम्।

अतएव परीतापस्तावकीना भविष्यति।
किन्तूपद्रवणं कृत्वा त्वमुपद्रवमाप्स्यसि ।
लोठयन् क्लान्ततां प्राप्तस्त्वमन्यैर्लोठयिष्यसे ॥

२ अनुकम्पां कुरुष्व त्वमस्मान् प्रति परेश्वर ।
त्वदीयापेक्षणं नित्यं कुर्म्महे सकला वयम् ।
प्रतिप्रभातमस्माकं भव त्वं बलरूपकः ।
तथास्माकं विपत्काले भव त्वं त्राणरूपकः ॥

३ त्वद्भयङ्करहुङ्कारात् पलायन्ते ऽखिला नराः ।
विदेशिनो विकीर्णत्वं प्राप्स्यन्ति प्रोत्थिते त्वयि ।
४ युष्माकं सर्व्ववस्तूनि ग्रसिष्यन्ति ततो जनाः ।
यथा ग्रासं प्रकुर्व्वन्ति द्रव्याणां शूककीटकाः ।
इतस्ततो यथा कीटाः कुर्व्वन्ति परिधावनं ।
तस्योपरि तथा सर्व्वे करिष्यन्ति प्रधावनं ॥

५ प्रांशुस्थाने निवासी यः परमेशः स प्रोन्नमन् ।
सियोनं न्यायधर्म्माभ्यां परिपूर्णं करिष्यति ।
कालावस्था तदीया या सुस्थिरा सा भविष्यति ।
६ परित्राणं तथा ज्ञानं धीर्निधिश्च भविष्यति ।
परेश्वराद् भयं यत् सा तस्य सम्पद् भविष्यति ॥

७ पश्य हा हा करिष्यन्ति तेषां ये बलवत्तराः ।
क्रन्दिष्यन्ति च ते ऽत्यन्तं ये दूता सन्धिकारकाः ।

८ तथा राजपथस्तेषां नरशून्यो भविष्यति।
पान्थः स्थास्यति नो कोऽपि नियमस्तेन भत्स्यते।
करिष्यते पुरं तुच्छं नृगणैश्चावमंस्यते।
९ अतः स क्रन्दिता देशो दुर्ब्बलश्च भविष्यति।
लिबानोन् प्रह्रियं प्राप्य म्लानिमेव गमिष्यति।
तथा शारोणारण्यस्य समानत्व प्रयास्यति।
तथा वाशन् च कर्म्मिल् च पत्रशून्यं भविष्यति॥
१० उत्थास्याम्यधुनैवाहं परेशः कथयेदिति।
विख्यातोऽहं भविष्यामि गात्रमुत्थाप्य चाधुना।
११ गर्ब्भं धृत्वा वुषं यूयं नालानि प्रसविष्यथ।
ततः स्वकीयनिश्वासो युष्मान् धक्ष्यति वह्निवत्।
१२ छिन्नकण्टकचूर्णानि दह्यन्ते वह्निना यथा।
तथैव सकला लोकाः परियास्यन्ति दग्धताः॥
१३ श्रृणुत कार्य्यवाचं मे दूरस्थाः सकला जनाः।
समीपस्था जना यूयं स्वीकुरुध्वं बलं मम।
१४ भीताएव भविष्यन्ति सियोनि स्थितपापिनः।
काल्पनिका जना ये ते वदिष्यन्ति सशङ्किताः।
अस्मन्मध्ये विनाशाग्निं को वा सोढुं प्रशक्ष्यति।
अस्मन्मध्ये सदा दाहं को वा सोढुं क्षमो भवेत्॥
१५ पूर्णं धर्म्मं चरेद्यस्तु सत्यञ्च वचनं वदेत्।

उपद्रवेण संप्राप्तं यश्च लाभमतीयते।
उत्कोचतो निजौ हस्तौ दूरतो यश्च निक्षिपेत्।
वधस्य मन्त्रणां श्रुत्वा निजौ कर्णौ रुणद्धि यः।
दुष्कर्मतो निजे नेत्रे मुद्रिते च करोति यः।
अतीवप्रोन्नते स्थाने तस्य वासो भविष्यति।
१६ सो ऽधिष्ठास्यति पाषाणे पर्व्वतस्य दुराक्रमे।
तथा तस्मै प्रदास्यन्ते भक्ष्याणि प्रतिवासरं।
सलिलानां तदीयानाम् अभावो न भविष्यति॥
१७ द्रक्ष्येते लोचने ते च सौन्दर्य्यसहितं नृपं।
नीवृतो दूरसंस्थस्य करिष्येते च दर्शनं।
१८ त्वन्मनो गतभीतीनां करिष्यति विवेचनाम्।
क्वेदानीं लिपिकर्त्ता स क्व राजकरधारकः।
क्व दुर्गगणकः क्रूरा वीक्षिष्यन्ते न ते त्वया।
अश्राव्या च गभीरा च भाषा यैः परिभाष्यते।
अबोध्यं स्खलद्वाक्यस्य मानुषैर्यैः प्रकथ्यते।
तानेव मनुजान् द्रष्टुं नहि त्वं लप्स्यसे पुनः।
१९ किन्त्वस्माकं पर्व्वे युक्तं त्वं द्रक्ष्यसि सियोनपुर।
यस्य नोत्पाट्यते स्तम्भो रज्जुश्च नैव छिद्यते।
सुस्थान्निवसतिं तस्माचलद्दूष्यस्वरूपकम्।
परिवीक्षिष्यसे त्वन्तु नगरं यिरूशालमम्।

तत्रास्मदीयपक्षे तु समाहात्म्यपरेश्वरः ।
सर्व्वेषामपि नद्यौघानामसंगम्या नदीव च ।
भविता नौतया युक्तो जलाशय इवापि सः ।
२१ यतः परेश्वरो ऽस्माकं विचारकारको भवेत् ।
२२ विधायको व्यवस्थाया अस्माकं परमेश्वरः ।
तथा परेश्वरोऽस्माकं नृपति र्भवति स्वयं ।
आस्माकीनं परित्राणं स एव प्रकरिष्यति ॥
२३ शिथिलं तव रज्ज्वादि लोकैश्च तव कूपकः ।
दृढं कर्त्तुं न शक्येत वातांशुतोलनाय च ।
तदानीं बहुलोप्त्राणां विभागश्च करिष्यते ।
लोठितानि च वस्तूनि धर्त्तुं शक्ष्यन्ति पङ्गवः ।
२४ पीडितोऽस्मीति वाक्यं न पौरः कोऽपि वदिष्यति ।
तन्निवासिमनुष्याणां पापक्षमा भविष्यति ॥

### ३४ चतुस्त्रिंशोऽध्यायः ।

वैरिणां भावी दण्डः ।

१ अन्यदेशिजना यूयं शृणुत निकटागताः ।
हे जातयः स्वचित्तानि निधद्ध्वं वचने मम ।
पृथिवी पृथिवीवासाः सर्व्वे शृण्वन्तु मद्वचः ।
जगत् तदुद्भवा लोकाः सर्व्वे शृण्वन्तु मद्वचः ।
२ यतो ऽन्यदेशिलोकानां सर्व्वेषां प्रातिकूल्यतः ।

अमर्षः परमेशस्य प्रज्वलितो भविष्यति।
विरुद्धमपि सैन्यानां चण्डकोपो ज्वलिष्यति।
निःशेषतः स तान्लोकान् विनाशं प्रापयिष्यति।
तेषामेव मनुष्याणां करिष्यति वधेऽर्पणं।
३ निक्षेप्स्यन्ते वहिस्ते च ये तेषां निहता जनाः।
तत्शवेभ्यो विनिर्गामी पूतिगन्धो भविष्यति।
तेषां रक्तैर् गिरिः संघो द्रवत्वं परियास्यति।
४ आकाशभानि सर्व्वाणि परियास्यन्ति नाशतां।
पत्रं यथा तथा व्योम सङ्कोचितं करिष्यते।
गोस्तनीशुष्कपत्राणि फलान्यौडुम्बराणि च।
परिशुष्कानि संपातं प्रतिगच्छन्ति यादृशं।
सर्व्वाणि तदीयानि निपतिष्यन्ति तादृशं।
५ यतः स्वर्गे मदीयोऽस्ति चन्द्रहासः प्रशाणितः।
पश्य नाशस्य दण्डो मे समर्पितनृणामपि।
विशेषादिदोमीयानाम् मस्तके स पतिष्यति।
असद्दशः परेशासि मेदसा तोषमेष्यति।
उर्णायुशावकानाञ्च छागानामपि शोणितैः।
मेषयकृद्वपाभिश्च तस्य हृप्ति र्भविष्यति।
६ वस्रायां भविता यज्ञो यत एव परेशितुः।
इदोम् देशे भविष्यन्ति वधा बहुलसंख्यकाः।

७ तैरेव सहितो घातः खड्गिनां संभविष्यति।
वृषभाश्च वृषैः सार्द्धं संभविष्यन्ति घातिताः।
देशस्तेषां मनुष्याणां रक्तै र्मत्तो भविष्यति।
धूलयो मेदसा तेषां यास्यन्ति परिदृप्ततां।
८ यतः कर्म्मफलं दातुं दिनमेतत् परेशितुः।
योग्यं दातुमिदं वर्षं सियोनः पक्षवादिनः।
९ तदीयनिम्नराः सर्व्वे संभविष्यन्ति तैलवत्।
धूलि र्गन्धकरूपा च तदीया संभविष्यति।
भविता तस्य भूमिश्च सर्व्वा ज्वलिततैलवत्।
१० निर्व्वाणत्वं दिवारात्रौ न कदापि प्रयास्यति।
सर्व्वकालं तदीयश्च धूमऊर्द्धं गमिष्यति।
शून्यः स्थास्यति देशः स पुरुषानुक्रमे ध्रुवं।
तस्य मध्येन नो कोपि कदापि च गमिष्यति।
११ शल्लकी जलहंसश्च तमेवाधिकरिष्यतः।
पेचको दण्डकाकश्च तत्र वासं करिष्यतः।
तस्योपरि परेशस्तु विनाशरूपरज्जुकां।
शून्यतारूपपाषाणमपि संयातयिष्यति।
१२ अध्यक्षतां विधातुं यान् तत्स्थान् आह्वयिष्यति।
एतादृशाः कुलीनाश्च संस्थास्यन्ति पुन र्नहि।
सर्व्वेषामध्यक्षलोकानाम् अभावः सम्भविष्यति।

१३ तदीयाट्टालिकायाञ्च कण्टकं प्रभविष्यति ।
एधिष्यन्ते च तद्दुर्गे वृश्चिकपत्रकोलिकाः ।
स देशो भुजगानाञ्च वासस्थानं भविष्यति ।
उष्ट्राख्यविहगानाञ्च सभास्थानं भविष्यति ।
१४ पशवः परिवत्स्यन्ति तत्र वन्याश्च प्रान्तराः ।
लोमशाः पशवो बन्धून् नेष्यन्त्याहूय तत्र च ।
विश्रामं तत्र प्राप्स्यन्ति वसन्तो भूतपेचकाः ।
१५ अण्डानि च प्रसोष्यन्ते वासं कृत्वातिपेचकाः ।
छायायां तानि प्रस्फोट्य संग्रहीष्यन्ति शावकान् ।
मेलिष्यन्ति च गृध्रिण्यस्तत्र स्वैः स्वामिभिः सह ।
१६ विचारयत संपाद्य पुस्तकं परमेष्ठिनः ।
एकस्यापि न चैतेषाम् अभावः संभविष्यति ।
एकैका पक्षिणी स्वं स्वं परिप्राप्स्यति पक्षिणं ।
यतएतत् परेशस्य मुखेन समुदीरितं ।
आत्मा तदीय एतस्य संग्रहञ्च करिष्यति ।
१७ तेनैव गुटिकापातः कृते तेषां करिष्यते ।
रज्ज्वा तदीयहस्ताभ्यां तदंशः परिमास्यते ।
तान् सर्व्वदाधिकाराय परिप्राप्स्यन्ति ते जनाः ।
पुरुषानुक्रमं यावत् ते निवत्स्यन्ति तत्र च ॥

---

## २५ पञ्चविंशोऽध्यायः ।

### १ ख्रीष्टीयराज्यस्योपगमनं सुखञ्च ।

१ आनन्दमभिलप्स्यते शुष्कस्थानञ्च प्रान्तरम् ।
सतेजस्कं वनं फुल्लं भविता गोलपुष्पवत् ।
२ ततपुष्पं भूषितं ह्लादात् प्रदर्शिष्यति गानतः ।
तस्मै लिवानन स्तेजः प्रतिदत्तं भविष्यति ।
कर्म्मिलस्यापि शारोणः सौन्दर्य्य सम्प्रदास्यते ।
३ ते जनाः परमेशस्य वीक्षिष्यन्ते परं महः ।
अर्थादस्माकमीशस्य भूतिं प्राप्स्यन्ति वीक्षितुं ।
हस्तो यो दुर्ब्बलस्तञ्च कुरुध्वं बलसंयुतम् ।
जानुनी कम्पमाने ये कुरुध्वं सुस्थिरे च ते ।
भीतान्तःकरणान् लोकान् प्रभाषध्वमिदं वचः ।
भवेत बलसंयुक्ता यूयं मैव बिभीत च ।
४ युष्माकमीश्वरो यस्तु कुरुध्वं तस्य दर्शनं ।
फलमर्थात् कर्म्मफलम् ईश्वरादागमिष्यति ।
स आगत्य च युष्माकं रक्षणं प्रकरिष्यति ।
५ तदानीमन्धलोकानां चक्षुर्नैर्मल्यमेष्यति ।
बधिराणां मनुष्याणां कर्णा यास्यन्ति मोचनं ।
६ मृगवत् खञ्जलोकाश्च संप्रदास्यन्ति लम्फनं ।
तथा मूकमनुष्याणां जिह्वा गानं करिष्यति ।

वने जलं तथारण्ये महास्रोतो भविष्यतः।
७ तथा मरीचिकास्थाने पुष्करिणी भविष्यति।
मरुभूमौ च तोयानां प्रस्रवणं भविष्यति।
सर्पाणां शयनस्थाने तृणादि वृद्धिमेष्यति।
८ पवित्रमार्गविख्यातं तत्र भावि नृपायनं।
नहि तेनाप्यशुचिः कोऽपि यातायातं करिष्यति।
किन्त्वीश्वरो नृणां तेषां सङ्गवर्त्ती भविष्यति।
तेनाज्ञानयुताः पान्था नहि यास्यन्ति भ्रान्ततां।
९ तथा तस्मिन् स्थले कोऽपि नैव स्थास्यति केशरी।
न हिंस्रा स्तत्र यास्यन्ति नैकोऽपि तत्र लप्स्यते।
किन्तु मुक्ता मनुष्या ये ते प्रयास्यन्ति तत्स्थलं।
१० परमेशस्य ये मुक्ताः परावृत्य च ते जनाः।
सियोनमुत्तरिष्यन्ति प्रकुर्व्वन्तो जयध्वनिं।
आनन्दो मुकुटस्तेषां नित्यं स्थास्यति मस्तके।
आनन्दयुं तथाह्लादं परिप्राप्स्यन्ति ते जनाः।
शोका आर्त्तस्वरा दूरात् करिष्यन्ति पलायनं॥

३६ षट्त्रिंशोऽध्यायः।

१ यिरूशालमं प्रति सन्हेरीब आक्रमणं ११ रब्शाके र्निन्दा-कथनं यिरूशिलं प्रति तत्प्रकाशनञ्च।

१ नृपे हिष्किये राजत्वं कुर्व्वति तच्चतुर्दशवत्सरे, अशूर-

रीयः सन्हेरीव्नामा राजा यिहूदायाः प्राचीरवेष्टि-
२ तानां सर्व्वनगराणां विरुद्धम् आगत्य तानि वशे चकार ।
ततोऽशूरीयो राजा बहुभिः सैन्यसामन्तैः सार्द्धं रब्-
शाकिं लाखीश्नगरात् यिरूशालम् नगरस्थितं
हिष्कियं भूपम् उपप्रेषयामास ; स उपरिस्थितायाः
पुष्करिण्याः प्रणाल्यां रजकभूमिगमनपथे ऽवस्थि-
३ तवान् । ततो हिल्कियस्य पुत्र इलियाकीम्नामा
राजग्टहाध्यक्षः शिब्नलेखक आसाफः पुत्रो योयाह्-
नामा इतिहासरचकश्च तं साक्षात् कर्त्तुं वहिर्जग्मुः ।
४ ततो रब्शाकिस्तान् जगाद, यूयं हिष्कियम् इमां
कथां भाषध्वम्, अशूरीयाणां भूपति र्महाराजः कथ-
५ यति, त्वं यं विश्वासं करोषि स कीदृशो विश्वासः ?
अहं वदामि, संग्रामयितुं तव या मन्त्रणा बलञ्चास्ते तत्
शब्दमात्रं; तस्मात् त्वं कुत्र प्रत्याशां कृत्वा मदीयाज्ञां न
६ ग्टह्णासि ? पश्य त्वं तस्यां भग्ननलयष्ट्यां अर्थात् मिसरि
विश्वसिषि; किन्तु यः कश्चित् तस्मिन् प्रत्याशां करोति
तस्य हस्तौ तेन विद्धीभूय क्षतवन्तौ भवतः, स्वीयसर्व्व-
७ शरणागतान् प्रति मिस्रीयः फिरौण् राजा तादृशः ।
यदि वदसि वयं प्रभौ परमेश्वरे प्रत्याशां कुर्म्महे
तर्हि यस्य प्रांशुस्थानं वेदिश्च हिष्कियः स्थानान्तरी

अथ यिहूदीयान् यिरूशालमि स्थितान् मनुष्यांश्च
भाषितवान् यूयं केवलं एतस्या वेद्याः सम्मुखे भजध्वं
८ स किं एष नहि? इदानीं मम प्रभुणा अशूरीय-
राजेन सह पणं कुरुध्वं; त्वं यदि तेषामारोहि-
लोकान् प्राप्नुयास्तर्हि द्वे सहस्रे हयानहं दास्यामि।
९ तस्मिन्नसति मम प्रभोरतिनीचानां भृत्यानां मध्ये
एकेन सेनापतिनापि सार्द्धं कथं संग्रामयिष्यथ? किन्तु
१० यूयं रथानां हयानाञ्च कृते मिसरि विश्वसिथ। किमहं
परमेश्वरीयाज्ञां विना देशमिमम् उच्छेत्तुम् इदानी-
मागमं? त्वं तं देशं गत्वा विनाशय परमेश्वर इति
मामाज्ञापयत्।
११ तत इलियाकीम् शिब्नो योयाहश्च रब्शाकिं
कथयामासुः विनयामहे वयम्, अरामीयभाषया निज-
दासान् वदतु, यतो वयं तां बोद्धुं शक्नुमः; प्राचीरोपरि
स्थितानां लोकानां कर्णगोचरे ऽस्मान् प्रति यिहूदि-
१२ भाषया न कथयतु। रब्शाकिः प्रत्युवाच, मम प्रभुः किं
केवलं तव राजानं त्वाञ्च वाक्यमिदं वक्तुं मां प्रेषितवान्?
ये युष्माभिः सार्द्धं स्वां स्वां विष्ठां भोक्ष्यन्ते स्वं स्वं मूत्रञ्च
पास्यन्ति प्राचीरोपरिस्थितान् युष्माकं तान् लोका-
१३ नपि किं वक्तुं नहि? तदनन्तरं रब्शाकिरुत्तिष्ठन् उच्चै

र्यिहूदिभाषया वदितुम् आरब्धवान्, यूयं महाराजस्य
१४ अर्थाद् अश्शूरीयस्य नृपतेः कथां शृणुत। महाराजः
कथितवान्, हिष्किया युष्मान् यन्न प्रवञ्चयेत्; यतो
१५ युष्मान् रक्षितुं तस्य शक्ति र्नास्ति। तथा परमेश्वरो
ऽस्मान् अवश्यम् उद्धरिष्यति नगरमिदं कदापि नाश्शू-
रीयस्य राज्ञो हस्ते ऽर्पयिष्यतीति कथयित्वा हिष-
१६ कियो युष्मान् परमेश्वरे न विश्वासयेत्। हिषकि-
यस्य कथां मा शृणुत, यतोऽश्शूरीयो राजा कथित-
वान्, यूयम् मया सह सन्धिं कृत्वा मदन्तिकमायात
यावद् अहम् आगत्य युष्माकं निजदेश इव शस्यं
१७ द्राक्षारसो भक्ष्यं द्राक्षाक्षेत्रम् एतैर्युक्तं कमपि देशं
युष्मान् न नयामि तावत् एकैको जनः स्वानि स्वानि
द्राक्षाफलान्युडुम्बरफलानि च भक्षय स्वस्वपुष्क-
१८ रिण्याः जलञ्च पिब। परमेश्वरोऽस्मान् उद्धरिष्यति
इति कथां कथयित्वा हिषकियो युष्मान् न भ्रमयेत्।
अन्यदेशीयदेवा अश्शूरीयस्य नृपते र्हस्तात् किं स्वं स्वं देशं
१९ अरक्षन्। हमातोऽर्पदीय देवाः कुत्र? सिफर्व्वयिमो देवाः
कुत्र? देवाः किं मदीयहस्तात् शोमिरोणम् अरक्षन्?
२० एतेषां देशानां देवानां मध्ये कोऽपि मम हस्तात् देशं
रक्षितुं नाशक्नोत् तर्हि परमेश्वरो मम हस्तात् किं यिरू-

२१ आलमं मोचयिष्यति? किन्तु लोका निरुत्तराःसन्तो
ऽतिष्ठन् एकस्या अपि वाचः प्रत्युत्तरं नोक्तवन्तः यतस्त-
२२ दुत्तरं मा ब्रूतेति राज्ञा प्रागाज्ञापितं। अनन्तरं हि-
ल्कियस्य पुत्र इलियाकीम् राजगृहाधिपतिः शिप्न-
लेखक आसाफः पुत्रो योयाह इतिहासरचयिता
च स्वं स्वं वस्त्रं छित्त्वा हिष्किययस्य समीपम् आगत्य
रब्शाकेः कथां तं ज्ञापयामासुः ॥

२० सप्तत्रिंशोऽध्यायः ।

१ यिस्रियिं प्रति हिष्कियस्य लोकप्रेषणं ८ हिष्कियं प्रति यिर्मियस्य प्रत्युत्तरं १४ मन्दिरे हिष्कियस्य प्रार्थनं २१ सन्-चेरीबम् अधि यिस्रियियस्य भविष्यद्वाक्यं ३५ सन्चेरीबस्य सैन्यानां विनाशनञ्च ।

१ राजा हिष्किय इति श्रुत्वा निजवस्त्रं छित्त्वा शोक-
२ वसनं परिधाय च परमेश्वरस्य मन्दिरं जगाम। अपरं
परिहितशोकवसनान् राजगृहाधिपम् इलियाकीमं
शिप्नलेखकं प्राचीनयाजकांश्च आमोसः पुत्रस्य भवि-
३ ष्यद्वक्तु र्यिस्रियियस्य समीपं प्रेषयामास । ततस्ते तं
अगदुः हिष्कियोऽकथयत्, अद्यतनं दिनं क्लेशभर्त्स-
नापमानानां दिनं, यतो बालकप्रसवस्य समय उप-
४ स्थितः किन्तु प्रसवितुं शक्ति र्नास्ति । रब्शाकेः प्रभुः
अश्शूरीयो राजा अमरमीश्वरं निन्दितुं यां कथां

कथयितुं रब्शाकिं प्रेषितवान् तत्र प्रभुः परमेश्वरस्तत्
श्रुतवान् तथा तव प्रभुः परमेशो यत् श्रुतवान् तत्
शासिष्यति; अतएव त्वं विनीय अवशिष्टलोकानां कृते
५ प्रार्थयस्व। इत्थं हिष्किय्स्य नृपस्य दासगणे यिग्र-
यियस्य समीपमुपस्थिते सति यिग्रयियस्तान् अवदत्,
६ युष्माकं स्वामिनं वदत, परमेश्वरोऽकथयत्, त्वं यद्अश्रौषीः
येन च वचसा राज्ञोऽशूरीयस्य दासा माम् अनिन्दन्
७ तस्मात् मा भैषीः। पश्य मया तन्मध्य एक आत्मा प्रवे-
शयिष्यते, स काञ्चित् वार्त्तां श्रुत्वा परावृत्य स्वं देशं
यास्यति ततोऽहं स्वदेशे तं खड्गेन नाशयिष्यामि॥
८ ततः परम् अशूरीयो राजा लाखीशनगराद्
गतवान् इति वार्त्तां निशम्य रब्शाकिः परावृत्य
सैन्येन लिब्नानगरावरोधनकाले तेन सार्द्धं मिलित-
९ वान्। तदानीं कूशदेशीयो राजा तिर्हकस्त्वया सह
संग्रामयितुम् आगच्छति वार्त्तामेतां श्रुतवान्, ततः सः
१० पुनर्हिष्कियस्य समीपं दूतान् प्रहित्य कथितवान्, यिहू
दीयं हिष्कियं नृपं वदत, यिरूशालम् अशूरीयरा-
जस्य वशे न भविष्यति, इमां कथां कथयित्वा तव
११ विश्वासभूमिरीश्वरस्त्वां भ्रान्तिं न जनयेत्। पश्य
सर्व्वान् देशान् अशूरीया राजानः सर्व्वथा यादृग्

उदच्छिन्दन् तत् त्वं श्रुतवान्; तर्हि त्वं कथम् उद्धरि-
१२ ष्यसे मम पूर्व्वपुरुषै र्विनाशितानां गोषन् हारन् रेत्-
सफ्देशीयानां तिलसर्निवासिन एदनस्य च सन्ता-
१३ नानां देवगणः किं तान् उदधरत्? हमातो राजा
कुत्र? अर्पादो राजा च कुत्र? तथा सिफर्व्वयिमो
नगरस्य हेनाव्वयो राजा च क?
१४ ततो हिष्कियो दूतानां हस्तात् तत्पत्रं नीत्वा
पपाठ; पश्चात् परमेश्वरस्य मन्दिरं गत्वा परमेश्व-
१५ रस्य सम्मुखे तत् विस्तारयामास। तदा हिष्कियः
१६ परमेश्वराय कथामेतां न्यवेदयत्, हे किरूबानां मध्य-
निवासिन् इस्रायेलः प्रभो सैन्याध्यक्ष परमेश्वर केव-
लस्त्वमेव पृथिव्याः सर्व्वराज्यानामीश्वरः, स्वर्गः पृथिवी
१७ च त्वया सृष्टजाते। हे परमेश्वर, कर्णौ निधाय शृणु, हे
परमेश्वर स्वचक्षुषी उन्मील्य पश्य। सन्हेरीबोऽमरेश्व-
१८ रमपमन्तुं या याः कथाः प्रहिता स्ताः शृणु। हे
परमेश्वर, अशूरीया राजानः सर्व्वदेशीयान् तेषां
१९ देशांश्च व्यनाशयत् तेषां देवान् अग्नौ न्यक्षिपन् यतस्ते
नेश्वराः किन्तु मानुषाणां हस्तकृतानि काष्ठानि प्रस्तर-
२० मयानि च वस्तूनि, तस्मात् ते तान् नाशितवन्तः। हे
अस्माकं प्रभो परमेश्वर वयमिति निवेदयामहे, साम्प्रतं

त्वं तस्य हस्तात् अस्मान् उद्धर, तेन त्वमेव परमेश्वर
इति पृथिव्याः सर्व्वदेशीया जना ज्ञास्यन्ति।

२१ ततः परम् आमोषः पुत्रो यिशयियो हिष्कियं
प्रति कथामेतां प्रेषयामास; इस्रायेलः प्रभुः परमेश्वर
इमां कथां कथयति, त्वम् अशूरीयस्य सनहेरीवं नृप-
तिमधि मह्यं यन्न्यवेदयस्तदधि परमेश्वरः कथामेतां
कथयति॥

२२ सियोनीया तु या कन्या त्वां तुच्छं प्रकरोति सा।
अपरं तावकीनं सा परिहासं करोति च।
तव साक्षात् यिरूशालम् दुहिता लाडयेत् शिरः।

२३ त्वं कस्य निन्दनं कस्यापमानं वा विधत्तवान्।
उच्चशब्दोर्द्ध्वदृष्टी ते कृते कस्य विरुद्धतः।
इस्रायेलधर्म्मरूपो यः किं तदीयविरुद्धतः।

२४ निजै र्दासैः परेशं त्वं निन्दित्वेतिवचो ऽवदः।
शिलोच्चयस्य शृङ्गाणि प्रभूतस्यन्दनैरहं।
अर्थात् पार्श्वं लिवानोनः समुपारूढवानहम्।
तदीयमेरसं वृक्षमुन्नतं छिन्नवानहं।
अच्छिद्यतोत्तमस्तस्य देवदारुतरु र्मया।
तदीयोच्चतमं स्थानं चोत्तमं काननं गतः।

२५ अहं खनित्वा तस्यैव कीलालं परिपीतवान्।

प्राचीरवेष्टितानाञ्च नगराणां अनाश्रयान्।
सर्व्वान् पादतलैः स्वीयैः संमर्द्दितवानपि।
२६ अहो कथं त्वया नैव प्रसमाकर्णितं त्विदं।
दूरपूर्व्वेस्त्वया या या नाम्नराशीकृताः किल।
मया पुरा तदीयञ्च समकारि निरूपणं।
चिरोक्तं मया तत् प्राक् तत् सिद्धमधुना कृतं।
२७ अतस्तेषां प्रजा भीतिं दौर्ब्बल्यञ्च त्रपां गताः।
क्षेत्रस्थं तृणं नव्यं गृहोपरि तृणं यथा।
अपक्वगुच्छशस्यञ्च भविष्यन्ति तथैव ते।
२८ किन्तूपवेशनं यत् ते वहिर्गमनमेव च।
अभ्यन्तरस्यागमनं मद्विरुद्धञ्च कोपनं।
एतानि सर्व्वकर्म्माणि संपरिज्ञातवानहं।
२९ मद्विरुद्धं त्वदीयो यः क्रोधो ऽहङ्कार एव च।
कर्णयो र्गोचरीभूतौ तौ मम्यङ्ग्रामकोमयोः।
अतएव प्रदास्यामि नासायां वडिशं तव।
खलीनं संप्रदास्यामि त्वदीयवदने निजं।
त्वां परावर्त्तयिष्यामि त्वदागमनवर्त्मना।
३० हे हिष्किय त्वदीयार्थं चिह्नमेतद् भविष्यति।
एकस्मिन् वत्सरे स्वस्मात् यत् शस्यमुदपद्यत।
द्वितीयवत्सरे तस्मात् समुत्पन्नन्तु शस्यकं।

भुक्त्वा तृतीयवर्षे त्वमुप्त्वा शस्यं लविष्यसि ।
द्राक्षाक्षेत्रञ्च कृत्वा तत्फलानि परिभोक्ष्यसे ।
३१ पलायितो ऽवशिष्टश्च यिहूदावंशमानवः ।
तत्स्वरूपस्य यन्मूलं तदधो वृद्धिमेष्यति ।
उपरिष्टात् तदीयानि फलिष्यन्ति फलानि च ।
३२ यत् यिरूशालमः शेषाः सियोनाख्य शिलोच्चयात् ।
पलायिता नरा ये ते भविष्यन्ति वहिर्गताः ।
सैन्याध्यक्षपरेशस्य सूद्योगात् तच्च सेत्स्यति ।
३३ अतो ऽशूरीयराजाय परेशः कथयेदिति ।
स एतस्मिन् पुरे नैव करिष्यति प्रवेशनं ।
नात्र क्षेप्स्यति वाणं नो फलकं दर्शयिष्यति ।
तथा विरुद्धमेतस्य जालं न योजयिष्यति ।
३४ परेशः कथयेत् येन पथा स समुपागतः ।
तेनैव च परावृत्य पुनः परिगमिष्यति ।
एतस्मिन् नगरे तेन प्रवेशो न करिष्यते ।
३५ अहं स्वार्थं स्वदासस्य दायूद्राजकृते तथा ।
समुद्धारं पुरस्यास्य करिष्यामि च रक्षणं ॥

३६ अनन्तरं परमेश्वरस्य दूतो ऽशूरीयाणां शिविरं गत्वा तेषां पञ्चाशीतिसहस्राधिकलक्षं लोकान् व्यनाशयत्; ततो ऽवशिष्टा लोका प्रत्यूष उत्थाय सकललोकान्

मृतामपश्यन्। अतएवाशूरीयो राजा सन्हेरीब् तस्मात्
३८ विमुखीभूय निनिवीनगरं प्रत्यागत्य न्यवसत्। पश्चात् स
निस्रोक्नामिकाया इष्टदेवताया मन्दिरे पूजयति त-
दानीम् अद्रम्मेलक् शरेत्सरनामकौ तदीयपुत्रौ खड्गाभ्यां
तं नाशयित्वा अरारटदेशं प्रति तौ पलायेतां; तत एसर्
हद्दोन्नामा तस्यान्यपुत्रस्तस्य पदे राजत्वं चकार।

## ३८ अष्टत्रिंशोऽध्यायः।

१ मृत्यो र्वार्त्तायां श्रुतायां सत्यां प्रार्थनया हिष्कियस्यायुषो वर्द्धनं, तस्य चिह्नदानञ्च ९ तन्निमित्तं गीतेन हिष्कियस्य धन्यवदनञ्च।

१ तदानीं राजनि हिष्किये व्याधिना मृतकल्पे सति
आमोसः पुत्रो यिशयियो भविष्यद्वक्ता तमुपागत्य
कथयामास, परमेश्वरः कथयति, त्वं स्वनिवेशनं निर्ण्णा-
२ हि, यतस्त्वं मरिष्यसि न जीविष्यसि। ततो हिष्कि-
यो भित्तेः सम्मुखीभूय परमेश्वरं प्रति संप्रार्थ्य कथ-
३ यामास, हे परमेश्वर विनयेऽहं सत्यतया सरलान्तःकर-
णेन च त्वत्समक्षं यातायातमहमाचरं, तव दृष्टौ यादृशं
सत्कर्म्माकरवं, तत् त्वमधुना स्मर, ततो हिष्कियो
४ ऽतीव क्रन्दितुमारब्धवान्। तदा परमेश्वरस्य वाक्य
मिदं यिशयियमुपातिष्ठत्, त्वं गत्वा हिष्कियं वद; तव
५ पूर्व्वपुरुषस्य दायूदः प्रभुः परमेश्वर इति कथयति,

तदीयां प्रार्थनामहं श्रुतवान् तदीयं चक्षुर्जलञ्च दृष्टवान्
६ पश्याहं तवायुः पञ्चदश वत्सरान् वर्द्धयिष्यामि । अहं
राज्ञो ऽश्शूरीयस्य हस्तात् त्वामिदं नगरञ्च रक्षिष्यामि
७ तव फलकच्छपश्च भविष्यामि । परमेश्वरस्तुभ्यं यदिदं
वाक्यं कथितवान् तत् साधयिष्यति, परमेश्वरात् तस्येदं
८ चिह्नं भविष्यति । पश्य आहसो घटिकाया उपरि
सूर्य्यस्य छायाया यावन्तो ऽंशा गतास्तेषां दशांशान्
परावर्त्तयिष्यामि । अनन्तरं सूर्य्यस्य छायाया याव-
न्तोऽंशा गतास्तेषां दशांशाः परावर्त्तन्त ।

९ रोगिणो रोगस्वास्थ्यसमये यिहूदाया राज्ञो हि-
ष्कियस्य लिपिरियं ॥

१० एतन्मया समाभाषि परगत्या निजायुषः ।
परकालस्य यद्द्वारं तत्प्रवेशः करिष्यते ।
वत्सरा अवशिष्टा ये नहि प्राप्स्यामि तानहं ।
११ मया प्रोक्तं मनुष्याणां जीवतां वसतिस्थले ।
याःनामपरमेशो यः पुनरीक्षिष्यते न सः ।
जगन्निवासिभिः सार्द्धं वीक्षिष्यन्ते न मानुषाः ।
१२ मामकीनं यदायुस्तु तदेव स्थानमन्यकं ।
पर्य्यगच्छत् समुत्थाय मेषपालकदूष्यवत् ।
निजमायुः समाच्छिन्नं मयैव तन्तुवायवत् ।

स तन्तुभ्यः समुच्छिद्य मां दूरे परिचिप्तवान्।
महायुषः छतः शेष एकाहोरात्रमध्यतः।
१३ एकाहोरात्रमध्ये स शेषं कर्तुं ममायुषः।
कीकसानि मदीयानि चूर्णयामास सिंहवत्।
तेन यावत् प्रगेऽकार्षमहं मृत्योः प्रतीक्षणं।
१४ तावच्चाषकवत् चीचीत् निस्वनं कृतवानहं।
सारसवदकार्षं चीत् शब्दञ्चापि कपोतवत्।
चक्षु र्मे चीणतां यातम् ऊर्द्धदृष्टिं प्रकुर्व्वतः।
दुर्दशां महतीञ्चाहं प्राप्तवान् परमेश्वर।
१५ उपकारं कुरु त्वं मे वच्यामि किमहं पुनः।
स पूर्णीकृतवान् तन् मां प्रति यद्वाक्यमब्रवीत्।
नम्रत्वेनावशिष्टानि वर्षाणि सकलान्यपि।
अहं प्रयापयिष्यामि मनसोदुःखकारणात्।
१६ प्रभो यैः सकलैरेते लोका जीवन्त्यनुग्रहैः।
मामकीनासवस्तैस्तु केवलैरभिरक्षिताः।
१७ आरोग्यजनकस्त्वं मे त्वं मे जीवनवर्द्धकः।
मदीयदुःखभोगो यः सोऽभवत् सुखदायकः।
समुद्धृता मम प्राणास्त्वया निधनखाततः।
चिप्तवान् निजपश्चात् त्वं मम पापानि सर्व्वशः।
१८ परलोको न धन्यं त्वां वदिष्यति कदाचन।

तावकीनां प्रशंसाञ्च नहि मृत्युः करिष्यति।
खातं प्रत्यवरोहन्ति मानुषा ये समुद्यताः।
सत्यतां तावकीनां तेऽपेक्षिष्यन्ते न जातुचित्।
१९ किन्त्वद्य यादृशं कुर्व्वे तादृशं जीविता जनाः।
जीविता एव धन्यं त्वां प्रवदिष्यन्ति मानवाः।
पितरो ज्ञापयिष्यन्ति सुतान् विश्वास्यतां तव।
२० अत्रायत परेशो मां ततोऽहं जीवनावधि।
वीणां संवाद्य गास्यामि परमेशस्य मन्दिरे।
२१ यिशयियो ऽवदत् उडुम्बरफलस्य खण्डमादाय संकुच्य स्फोटके लेपनात् तस्य स्वास्थ्यं भविष्यति।
२२ ततो हिष्कियः कथितवान्, परमेश्वरस्य मन्दिराय मम गमनस्य चिह्नं किं?

### ३९ ऊनचत्वारिंशोऽध्यायः।

१ हिष्कियस्याभिमानः २ तस्य देशस्य भाविदण्डश्च।

१ तस्मिन् काले बलदनस्य पुत्रो मिरोदक् बलदन् नामा बाबिलो राजा हिष्कियस्य रोगित्वसुस्थत्वयो र्वार्त्ताः श्रुत्वा दूतद्वारा पत्रम् उपढौकनञ्च तस्मै प्राहि-
२ णोत्। ततो हिष्किय आनन्दितः स्वीयकोषम् अर्थात् रूप्यस्वर्णसुगन्धिद्रव्यमहार्घतैलानि निजास्त्रागारं भाण्डागारस्थानि सर्व्ववस्तूनि च तान् अदर्शयत्

हिष्कियो यत् तान् न दर्शितवान् तादृशं किमपि वस्तु तद्गृहे सर्व्वदेशे वा नासीत् ॥

३ अनन्तरं भविष्यद्वक्ता यिशयियो राज्ञो हिष्कियमुपागत्य तं पृष्टवान् ते मनुष्याः किमकथयन्? कुतो वा त्वामुपागच्छन्? ततो हिष्कियः प्रत्यवदत्

४ इमे दूरदेशात् बाबिलो मामुपागताः । सोऽप्राक्षीत् इमे तव गृहे किं किम् अपश्यन्? हिष्कियः प्रत्यवादीत् मदीयगृहे यद् यद् आस्ते तत् सर्व्वं दृष्टवन्तः तानहं यन्न दर्शितवान् सम्पत्ते मध्ये तादृशं किमपि

५ वस्तु नास्ति । ततो यिशयियो हिष्कियम् अवा-

६ दत् सैन्याध्यक्षपरमेश्वरस्य कथां शृणु । पश्य तव पूर्व्वपुरुषेभ्यो ऽद्यपर्य्यन्तं यद्यत् सञ्चीयते तव गृहे यत् किञ्चिदस्ति तत् सर्व्वं बाबिलनगरं नेतुं समय उपस्थास्यति, तस्य किञ्चिदप्यवशिष्टं न स्थास्यति पर-

७ मेश्वर इति कथयति। तथा तदीयौरसानां त्वत्त उत्पन्नसन्तानानां मध्यात् कियन्तो नीयमाना बाबिलो

८ राज्ञो गृहे छिन्नपुंस्काः स्थास्यन्ति । ततो हिष्कियो यिशयियं भाषितवान्, त्वं परमेश्वरस्य यां कथामुक्तवान् सोत्तमा; पुनश्च गदितवान्, मम राज्यस्य समये मङ्गलं सत्यत्वञ्च भविष्यतः ॥

## ४० चत्वारिंशोऽध्यायः ।

१ शुभवार्त्तायाः कथा ९ तस्याः प्रकाशनं १२ परमेश्वरस्य अतुल्यत्वं १८ देवानामसारत्वं २० परमेश्वरीयलोकानाम् उपकारश्च ।

१ युष्माकमीश्वरो वाक्यमिदमेव प्रभाषते ।
सान्त्वयन्तां परिसान्त्वयन्तां युष्माभि र्मम मानवाः ।
२ यिरूशालम्स्थितान् लोकान् प्रभूत सान्त्वनावचः ।
ज्ञापयतेति तान् तेषां संग्रामः शेषतां गतः ।
प्रायश्चित्तञ्च पापानां सुग्राह्यमभवत् किल ।
पातकानां स्वकीयानां दण्डतो द्विगुणं शुभं ।
परमेश्वरहस्ताभ्यां तैरेव परिलप्स्यते ।
३ इत्येतद्वदतो वाक्यं प्रान्तरे विद्यते रवः ।
परमेशस्य यः पन्थाः सुपरिष्क्रियतामसौ ।
अस्माकीनेश्वरीयं यत् मध्येप्रान्तरसंस्थितं ।
अयनं राजकीयन्तु तत्समानं विधीयतां ।
४ नीचा उच्चा भविष्यन्ति भूमयः सकला अपि ।
सर्व्वे नीचा भविष्यन्ति पर्व्वताश्चोपपर्व्वताः ।
सरलास्ते भविष्यन्ति वक्राध्वानश्च सन्ति ये ।
उच्चावचा च या भूमिः सा समाना भविष्यति ।
५ प्रतापः परमेशीयः सम्प्रकाशो भविष्यति ।
वीक्षिष्यन्ते तमेकत्र प्राणिनः सकलाश्चपि ।

एषा वाणी परेशस्य वदनेन प्रभाषिता ।
६ तत्पश्चाद् घोषये वाक्यं एव एषः समुद्गतः ।
ततो मया समाभाषि घोषयिष्यामि किं वचः ।
तृणेन सदृशाः सन्ति सर्व्वएव शरीरिणः ।
क्षेत्रस्थपुष्पतुल्यानि तेषां तेजांसि सन्ति च ।
७ तेषामुपरि संवाति चेत् कदाचित् प्रभञ्जनः ।
तदा तृणानि शुष्यन्ति संम्लान्ति कुसुमानि च ।
अतएवतृणप्राया नितान्तं सन्ति मानुषाः ।
८ तृणानि शुष्कतां यान्ति म्लानिं पुष्पाणि यान्ति च ।
किन्त्वस्मदीशवाक्यानि परिस्थास्यन्ति सर्व्वदा ॥
९ सियोनं प्रति सद्वार्त्तां प्रचारकारिकन्यके ।
उन्नतस्य महीध्रस्यारोहणं क्रियतां त्वया ।
यिरूशालमम् उद्दिश्य शुभवार्त्ताप्रचारिणि ।
कन्ये त्वं बलतः प्रोच्चैः कुरु स्वरं स्वरं कुरु ।
मा भैषीस्त्वं मनुष्यांश्च यिहूदानगरस्थितान् ।
इत्थं वद च युष्माभिः स्वेश्वरः परिदृश्यतां ।
१० पश्य पराक्रमे युक्तः प्रभुरेषः परेश्वरः ।
आयास्यति स्वहस्ताभ्यां शासनञ्च करिष्यति ।
पश्य तस्य फलं देयं तेन सार्द्धं प्रविद्यते ।
तद्देयः पारितोषश्च तदीयाग्रे प्रवर्त्तते ।

११ मेषाणां प्रजवत् स्वीयं प्रजं स चारयिष्यति ।
तत्शावकान् स संगृह्य संवक्ष्यति स्ववक्षसि ।
तद्दुग्धदायिनीःसर्व्वा मन्दं मन्दं नयिष्यति ॥

१२ स्वप्रसृत्या समुद्रस्य जलं केन मितं कदा ।
वियत् परिमितं केन प्रादेशेन निजेन च ।
तथैव पृथिवीधूलि र्मिता द्रोणेन केन च ।
तुलया तुलिताः केन पर्व्वताश्चोपपर्व्वताः ।

१३ आत्मने परमेशस्य दत्तवान् मन्त्रणाञ्च कः ।
को वा जनो भवन् मन्त्री मन्त्रणां तमशिक्षयत् ।

१४ केन वा सहितः सोपि मन्त्रणां कृतवान् कदा ।
कस्तस्मै दत्तवान् बुद्धिं विचारमप्यशिक्षयत् ।
को ऽशिक्षयद् वा तं ज्ञानं धीवर्त्म वाप्यबोधयत ।

१५ पश्य देशीयलोकाश्च सर्व्वे कुम्भाम्बुविन्दुवत् ।
धूलिस्तुलास्थिता या च तद्देककणिकासमाः ।
पश्योपद्वीपवर्गश्चाणुवत् तोल्यते च सः ।

१६ वह्नेः कृते लिवानोन् हि प्रचुरो नैव जायते ।
प्रभूतो नहि जायेत लिवानोन् हुतभुक्कृते ।
तस्य जन्तुगणो नापि होमार्थं प्रचुरो भवेत् ।

१७ तत्संमत्वम असाराः स्युर् मनुष्याः सर्व्वदेशजाः ।
असारत्वादसारास्ते नहि गण्या भवन्ति च ॥

१८ ईश्वरस्य तुलनां केन साकं यूयं करिष्यथ।
१९ यूयं केन प्रकारेण तस्य मूर्त्तिं करिष्यथ।
तक्ष्यते कर्म्मकारेण प्रतिमा परिषिच्यते।
खच्यते स्वर्णकारेण स्वर्णपत्रेण सैव च।
तदर्थं परिनिर्म्माति रूप्यशृङ्खलमेव च।
२० नैवेद्यं बहुमूल्यं यो दातुं नैव चमो भवेत्।
सनोनोत्ताजरं काष्ठम् अचलां प्रतिमां स तु।
निर्म्मातुं शिल्पिनं कञ्चिन् निपुणं संगवेषयेत्।
२१ यूयं किं न विजानीत नैवाशृणुत किं तथा।
पूर्व्वकालात् युष्माकं समीपे किं प्रकाशितं।
आमूलस्थापनात् पृथ्व्या इदं किं नाप्यबुध्यत।
२२ ईश्वरः परिसन्तिष्ठेद् आकाशमण्डलोपरि।
पृथिवीवासिनस्तस्य समीपे सूककीटवत्।
विस्तारयेन्नभोभागं स तिरस्करिणीमिव।
स दूष्यमिव वासार्थं प्रशस्तं विदधाति च।
२३ सर्व्वेश्वरहितान् कुर्य्यात् सएवाधिपतीन् जनान्।
करोत्यसारमाचान् स पृथिव्या अधिकारिणः।
२४ उप्ता वा रोपिताः सन्तो नहि तिष्ठन्ति ते जनाः।
तेषां काण्डस्य मूलञ्च चितौ तिष्ठति न स्थिरं।
श्वासिं याम्ति च ते तेन तेषामुपरि फुत्कृते।

घूर्णेन वायुना तान् स उड्डायति च नालवत् ।
२५ उच्यते धर्म्मरूपेण मया कस्योपमा भवेत् ।
अहञ्च कस्य लोकस्य सदृशो भवितास्मि च ।
२६ ऊर्द्ध्वं निरीक्ष्य पश्य त्वं को ऽसृजत् तारका इमाः ।
सो ऽखिला गणयित्वा च समानयति सर्व्वशः ।
गृहीत्वाखिलनामानि स आह्वयति कृत्स्नशः ।
ततो महाबलात् तस्य तस्यातीवपराक्रमात् ।
तासामेका न तारापि संभवत्यनुपस्थिता ॥
२७ मम पन्थाः परेशस्य दृष्टो गुप्तोहि तिष्ठति ।
विचारं मामकीनं न मदीयेशः प्रमन्यते ।
हे याकूब् ईदृशी वाणी त्वया कुत उदीर्य्यते ।
हे इस्रायेल् इदं वाक्यं प्रोच्यते च त्वया कुतः ।
२८ एतत् किं त्वं न जानासि किमेतन्न श्रुतं त्वया ।
परेश्वरः प्रभु र्नित्यो भूमीमा तेन सृज्यते ।
स गच्छति नहि क्लान्तिं न क्वापि श्रान्तिमेति च ।
२९ अगम्या तस्य बुद्धिः स क्लान्तेभ्यो वितरेद् बलं ।
तथा दुर्ब्बललोकानां सामर्थ्यं वर्द्धयेच्च सः ।
३० युवानः श्रान्तिमेष्यन्ति यास्यन्ति क्लान्तिमेव च ।
मनोनीता युवानश्च स्खलिष्यन्ति च निश्चितं ।
प्रतीक्षन्ते परेशं ये ते प्राप्स्यन्ति बलं नवं ।

उत्थास्यन्ति यथोतक्रोशाः श्रान्तिं नैष्यन्ति धाविनः।
दुर्ब्बला न भविष्यन्ति प्रगच्छन्तोपि ते जनाः ॥

## ४१ एकचत्वारिंशोऽध्यायः।

१ सर्व्वलोकान् प्रति ईश्वरस्य निवेदनं ५ प्रतिमाया असारत्वं ८ ईश्वरस्य लोकानां भयनिषेधः १० तेषां सुखं २१ ख्रष्टमधि भविष्यद्वाक्यञ्च।

१ नीरवा दूरदेशस्थाः प्रटत्यन्तु मम सन्निधौ।
प्राप्नुवन्तु नवीनं हि नवीनं जातयो बलं।
मत्सन्निधावुपस्थाय वचनानि वदन्तु च।
वयमेकत्र सम्भूय विचारं करवामहै।
२ पूर्व्वस्या धार्म्मिकं लोकं क उत्पन्नं करिष्यति।
अनुगन्तुं पदोः स्वेपं समाज्ञास्यति कश्च तं।
करिष्यति परास्तांश्च तत्साक्षात् को विदेशिनः।
तं राज्ञामधिराजञ्च को मनुष्यः करिष्यति।
तान् तस्य खड्गधाराये धूलिवत् कः करिष्यति।
चापाये चालिता न्याडीरिव तान् कः करिष्यति।
३ स तेषां मानवानाञ्च पश्चाद्भावं करिष्यति।
निजपद्भ्यां पथा येन कदापि गतवान् न सः।
निर्विघ्नं तेन मार्गेण गमनं स करिष्यति।
४ कः करिष्यति तत् सर्व्वं कः सम्पन्नं करिष्यति।

आह्वयन्ते पुमांसश्च येनैव प्रथमावधि ।
आदितः शेषपर्य्यन्तं स्थायी भवति यः सदा ।
परमेशः सएवाहम् करिष्याम्यहमेव च ॥
५ तद् दृष्ट्वा दूरदेशस्था भविष्यन्ति भयान्विताः ।
लोकाः शङ्कां गमिष्यन्ति पृथिवीप्रान्तसंस्थिताः ।
सन्निधिं ते समागत्य संमेलिष्यन्ति सर्व्वशः ।
६ सर्व्वे उपकरिष्यन्ति स्वस्वसन्निधिवासिनः ।
भ्रातस्त्वं साहसी भूया इति वाक्यञ्च वक्ष्यति ।
७ आश्वासिष्यति वाक्येन वर्द्धकिः स्वर्णकारकं ।
द्रुघनेन समानं यः प्रकरोति स मानुषः ।
आश्वास्यायोघने प्रान्तमधि योजं वदिष्यति ।
भद्रो योजो भवत्येषो यथा मूर्त्ति र्न संलडेत् ।
तदर्थं लौहकीलेन तां बद्धां प्रकरिष्यति ॥
८ हे मम दास इस्रायेल् हे याकूब् मन्मनोगत ।
मद्भक्तिवप्राहिमः सूनो स्वहस्तेन समाधरन् ।
९ पृथिवीप्रान्ततो भागात् त्वामेवाहं समानयं ।
सीमातश्च पृथिव्या त्वमाह्वय भाषितो मया ।
मद्दासस्त्वं मनोनीतं त्वामेव त्वतवानहं ।
तत्राहं न परित्यागं करिष्यामि कदाचन ।
१० मा भैषीस्त्वं सहायस्ते त्वदीयो भविताह्ययं ।

तथा भीतश्च मा भूया अहं यस्मात् त्वदीश्वरः।
उपकारं करिष्यामि दास्ये तुभ्यं पराक्रमं।
स्वधर्म्मदक्षहस्तेन त्वं मया धारयिष्यसे।
११ पश्य ये त्वां प्रति क्रोधं परिकुर्व्वन्ति मानवाः।
ते विवर्णा भविष्यन्ति भविष्यन्ति च लज्जिताः।
ये युद्ध्यन्ति त्वया सार्द्धं ते विनंच्यन्ति सर्व्वथा।
१२ विवादञ्च त्वया सार्द्धं ये करिष्यन्ति मानवाः।
त्वं मृगयिष्यसे तांश्च किन्तूद्देशं न लप्स्यसे।
संग्रामं ये त्वया सार्द्धं प्रकरिष्यन्ति मानवाः।
असारास्ते भविष्यन्ति ते ऽभावाएव सर्व्वशः।
१३ यतोहं परमेशस्ते ऽहमेव च प्रभुस्तव।
दक्षिणं ते करं धृत्वा दृढं वक्ष्याम्यहं वचः।
उपकारं करिष्यामि तव त्वं मा भयं कुरु।
१४ कीटस्वरूप हे याकूब् हे इस्रायेल् अमात्यक।
परेशः कथयेदित्थं मैव त्वं साध्वसं कुरु।
अहमेव भविष्यामि तावकीनः सहायकः।
इस्रायेल् धर्म्मरूपो यः सएव तव मुक्तिदः।
१५ पश्याहं ग्रसमर्दार्थं त्वामेव शकटैककं।
नवीनग्रसमर्दार्थं तीक्ष्णदन्तसमायुतं।
शकटैकं करिष्यामि यथाकर्षम् अनल्पधा।

पर्व्वतान् मर्द्दयित्वा त्वं संचूर्णान् प्रकरिष्यसि ।
उपपर्व्वतसंघञ्च त्वं तुषाणि विधास्यसि ।
१६ प्रस्फोटितानि ते तानि वायुरुड्डाययिष्यति ।
घूर्णः प्रभञ्जनस्तानि विकरिष्यति सर्व्वतः ।
किन्तु त्वं परमेशे हि महानन्दं करिष्यसि ।
इस्रायेल धर्म्मरूपे च करिष्यसि जयध्वनिं ॥
१७ ये दीना दुर्गतास्तोयं मृगयित्वा न लेभिरे ।
येषां नृणां रसज्ञाश्च तृष्णया शुष्कतां गताः ।
अहं परेश्वरस्तेषु निधास्यामि मनस्तदा ।
इस्रायेल ईश्वरश्चाहं नहि त्यक्ष्यामि तान् जनान् ।
१८ उच्चस्थाने नदी नीचे वाहयिष्यामि प्रस्रवान् ।
वनं पुष्करिणीं शुष्कं करिष्यामि जलाशयं ।
१९ एरसवावलुजितान् मेन्दिं रोपयिष्ये च कानने ।
२० तिधरं रोपयिष्येहं ताशूरं देवदारु च ।
परेश्वरः स्वहस्तेन कर्म्मैतत् कृतवानिति ।
इस्रायेल धर्म्मरूपेण सृष्टिरेषा कृतेति च ।
ते द्रक्ष्यन्ति च वेत्स्यन्ति भोत्स्यन्ते च विवेचनैः ॥
२१ परमेशो वदेदित्थं युष्माभिरभियुज्यताम्
याकूबो भूपति र्वक्ति यूयं सर्व्वे निजं निजं ।
यत् प्रमाणं दृढं तस्य कुरुध्वञ्च प्रकाशनं ।

२२ अस्मत्समीपमागत्य घटनं भूत भावि च।
भविष्यद्वचनं किं तत् प्रकाशयत नः प्रति।
ततो ऽस्माभि र्विविच्यैव फलं ज्ञातुं प्रशक्यते।
यद्वा किं भविता यूयं संश्रावयत तद्धि नः।
२३ किं किं घटिष्यते पश्चात् तद् युष्माभिः प्रकाश्यतां।
तत्कृते यूयमीशा यद् वोढुं शक्ष्यामहेव तत्।
शुभं कुरुथ यूयं वा कुरुथाशुभमेव च।
शङ्कया वा चमत्कृत्या भविष्यामोऽहता वयं।
२४ अभावादप्यभावास्तु यूयं भवथ निश्चितं।
असारादप्यसारा च युष्मदीया कृति र्भवेत्।
यः करोति मनोनीतान् युष्मान् स स्याद् घृणास्पदं।
२५ एकमुत्पादयिष्यामि लोकमुत्तरतोदिशः।
एत्य तिष्ठन् स पूर्व्वस्यां मन्नाम्नि प्रार्थयिष्यते।
यथा च मर्द्दयेद् पङ्कं दलयेत् कुम्भकृद् मृदं।
सर्व्वाध्यक्षगणांस्तेन तथैव दलयिष्यते।
२६ अस्मान् ज्ञापयितुं पूर्व्वं एतत् केन प्रकाशितं।
सत्यमेतद्वयं वक्तुं यथा केन प्रभाषितं।
युष्माकं कोपि लोकस्तत् न प्रकाशयितुं क्षमः।
नहि ज्ञापयितुं कोपि मनुष्यः शक्तिमान् भवेत्।
युष्माकं भाषिवाक्यञ्च नहि कोपि शृणोति च।

२७ सियोनं प्रथमं वच्मि दृश्यन्तां ते जनास्त्वया ।
प्रेषयामि यिरूशालम् सुसंवादप्रचारकं ।
२८ यतो ऽपश्यमहं तेषां न कोऽपि विद्यते जनः ।
देवानां मध्यतो ऽपश्यं मन्त्री कोऽपि न विद्यते ।
मया पृष्टाश्च ते लोका उत्तरं दातुमक्षमाः ।
२९ पश्य सर्व्वेऽपि ते ऽसारा तेषां मिथ्या हि कर्म्म च ।
तच्चिता प्रतिमा तेषामसारा वायुरेव च ॥

४२ द्विचत्वारिंशोऽध्यायः ।

१ ख्रिष्टीयं मनःकर्म्म च भविष्यद्वाक्यं ५ तस्मिन् परमेश्वरस्य नियमः १० ईश्वरं धन्यं वक्तुं विनयकथनं १२ सुसंवादस्य सफलता १७ प्रतिमाया असारता १८ यिहूदस्य कथा २२ यिहूदिलोकानाम् अविश्वासता दण्डश्च ।

१ मम धृतो मनोनीतो मनस्तुष्टिकारकः ।
मदीयः सेवको यस्तु विद्यते तं समीक्षतां ।
तस्योपरि स्वकीयात्मा मया संस्थापयिष्यते ।
तेनान्यदेशजातेषु व्यवस्था संप्रकाश्यते ।
२ केनापि न विरोधो वा कलहश्च करिष्यते ।
न च राजपथे तस्य वचनं श्रावयिष्यते ।
३ व्यवस्था चलिता यावत् नहि तेन करिष्यते ।
तावत् नलो विदीर्णोऽपि भंक्ष्यते नहि तेन च ।
तथा सधूमवर्त्तिञ्च न स निर्व्वापयिष्यते ।

४ यावत् धर्म्मं पृथिव्यां स नहि संस्थापयिष्यति ।
न यावदन्यदेशीयैस्तद्व्यवस्थाप्यपेक्ष्यते ।
तावद्धीनबलो नासौ भग्नाशश्च भविष्यति ।
५ येन सृष्टं नभोबिम्बं विस्तारो ऽकारि तस्य च ।
भूश्च तज्जातवस्तूनि येन विस्तारितानि हि ।
यश्च निश्वासप्रश्वासौ भूमिस्थेभ्यो ददाति च ।
पृथिवीगामिलोकेभ्यो यश्च प्राणान् प्रयच्छति ।
६ सएव प्रभुरित्येतत् कथयेत् परमेश्वरः ।
आह्वास्यामि परेशोऽहं त्वामेव धर्म्मकारणात् ।
धृत्वा त्वदीयहस्तञ्च करिष्ये तव रक्षणं ।
७ त्वं नियमस्वरूपश्च भविष्यसि जनान् प्रति ।
अन्यदेशीयलोकेभ्यो दीप्तिरूपो भविष्यसि ।
नेत्राण्यन्धमनुष्याणां ज्योतितानि करिष्यसि ।
वन्दिनो मनुजान् बन्धात् प्रमुक्तांश्च करिष्यसि ।
करिष्यसि विमुक्तिञ्च ध्वान्तकारानिवासिनां ।
८ अहमेव परेशश्च नामधेयमिदं मम ।
इतरस्मै स्वकीयञ्च न प्रदास्यामि गौरवं ।
तथा तक्षितमूर्त्तिं च न दास्यामि मम स्तुतिं ।
९ पश्य वाक्यञ्च प्रत्यक्षं पूर्व्वीयभाविवादिनां ।
इदानीं घटनां नव्यां प्रकुर्व्वे ऽहं प्रकाशितां ।

घटमातः पुरा युष्मान् तदहं ज्ञापयामि च ॥
१० हे सिन्धुगामिनः सर्व्वे हे सिन्धूपरिसंस्थिताः।
हे दूरस्थितदेशाश्च हे दूरदेशवासिनः।
यूयं परेशमुद्दिश्य गीतं गायत नूतनं ।
प्रान्तप्रदेशतो भूमेस्तत्प्रशंसां विधत्त च।
११ काननं तस्य मध्ये च नगरं परिसंस्थितं ।
केदरेणोषिता पूश्च करोतु शब्दमुच्चकैः।
लोकाः पाषाणदेशस्थाः प्रकुर्व्वन्तु जयध्वनिं ।
ते तु पर्व्वतचूडातः प्रकुर्व्वन्तु महाध्वनिं।
१२ ते जनाः परमेशस्य स्वीकुर्व्वन्तु गौरवं।
मध्ये दूरस्थलोकानां प्रकाशयन्तु तत्स्तवं ॥
१३ वीरवत् परमेशेन यात्रा परिकरिष्यते ।
महायोद्धेव कोपस्य प्रकाशं स करिष्यति ।
करिष्यति महानादं चोच्चैः शब्दं करिष्यति ।
स्ववैरिणां विरुद्धं स स्वबलं द्योतयिष्यति ।
१४ वदिष्यति चिरं कालम् अहमुक्त्वा न किञ्चन।
अतीव नीरवो भूत्वा सहिष्णुत्वं समाश्रयं ।
किन्त्विदानीं यथा नारी गर्भिणीवेदनाकुला ।
निश्वासं यत्नतो धृत्वा हुंकरिष्याम्यहं तथा ।
१५ मया शून्याः करिष्यन्ते पर्व्वताश्चोपपर्व्वताः ।

तस्योपरि स्थितं सर्व्वं तृणं शुष्कीकरिष्यते।
नदी वनीकरिष्ये च खातं शुष्कीकरिष्यते।
१६ अज्ञातपूर्व्वमार्गेण नेष्याम्यन्धजनानहम्।
पूर्व्वानिश्चितमार्गे च गमयिष्यामि तान् जनान्।
तेषामग्रे ऽन्धकारञ्च प्रकरिष्यामि दीपनं।
उच्चं नीचञ्च पन्थानं प्रकरिष्यामि वै समं।
तेषां कृते करिष्यामि कर्म्माण्येतानि सर्व्वशः।
परित्यक्ष्याम्यहं नैव तान् मनुष्यान् कदाचन॥
१७ तक्षितप्रतिमायां ये प्रविश्वसन्ति मानवाः।
समीपे सिक्तमूर्त्तीनां यूयं नो देवता इति।
वर्द्धन्ति ते त्रपिष्यन्ते पश्चाद् संपतनं गताः॥
१८ शृणुत बधिरा द्रष्टुमन्धास्त्वचु निमीलत।
यथा मदीयदासेय स्तथान्धः कोऽस्ति मानवः।
१९ मया मे प्रेषितो दूत स्तादृशो बधिरोस्ति कः।
मदीयमित्रवत् को वा मानुषो ऽन्धस्त विद्यते।
परमेशोयदासस्य सदृशो ऽन्धजनोस्ति कः।
२० वीक्षतेऽनेकवस्तूनि निधत्ते नहि मानसं।
श्रवणाद्धि कर्णं न किन्तु नैव शृणोति च।
२१ तद्धेतो स्तस्य धर्म्मार्थं संतुष्यति परेश्वरः।
सगौरवां व्यवस्थां स सम्मान्याञ्च करिष्यति।

२२ अपहृतो भवेद्यो लोठितश्च भवत्यपि।
तेषां नृणां मनोनीत साहाय्यानां गणश्च यः।
उन्माथे संधृतो गाढं कारावद्धो भवेच्च सः।
तानेवापहृतान् लोकान् नोद्धरेत् कोपि मानवः।
तेषां लोठितवस्तूनि देहीति कोपि नो वदेत्।
२३ इदृग्वाक्ये ऽवधानं को युष्मन्मध्ये करिष्यति।
आकर्ण्य भाविकाले को मनोयोगं करिष्यति।
२४ केनापहारितो याकूब् इस्रायेल् केन लोठितः।
ते जनाः पातकं यस्य प्रतिकूलं समाचरन्।
यन्मार्गे गमनं कर्त्तुं सममन्यन्त ते नहि।
यदीयाश्च व्यवस्थां नो प्राबुभुत्सन्त ते जनाः।
एतादृशः परेशो यस्तेन तत् कारितं न किं।
२५ तापं स्वकीयकोपस्य तथा युद्धपराक्रमं।
प्राकाशयत् स तानेव सकलान् मानवान् प्रति।
तच्छिखा तच्चतुर्दिक्षु ज्वलिता समजायत।
किन्तु ते नह्यमन्यन्त सा तान् सर्व्वान् समादहत।
तथापि ते मनुष्या न मनोयोगमकुर्व्वत॥

## ४३ त्रिचत्वारिंशोऽध्याय ।

१ स्वीयलोकेभ्यनुग्रहवाक्यम् ईश्वरस्य १० तस्मिन् लोकानां साक्षित्वं १४ बाबिलोऽधःपतनं १६ ईश्वरीयलोकानां दयाकथनं २२ तान् प्रतीश्वरस्य भर्त्सनञ्च ।

१ हे याकूब् तव स्रष्टा य इस्रायेल् तव सर्जकः ।
स परेशोऽधुना वाक्यं वक्तीदं, मा भयं कुरु ।
अहं त्वां मोचयिष्यामि गृहीत्वा तव नाम च ।
तवाह्वानं करिष्यामि मदीयोसि त्वमेव हि ।
२ यत्कालं जलमध्येन गमनं त्वं करिष्यसि ।
अहं तत्समये नूनं स्थास्यामि सहित त्वया ।
यदा स्रोतस्वतीमध्ये गमनं त्वं करिष्यसि ।
तदा तरङ्गिणीतोयं न त्वां मग्नं करिष्यति ।
अग्नेर्मध्येन गच्छन् त्वं नहि दग्धो भविष्यसि ।
तदीया या शिखा सा ते दाहं न जनयिष्यति ।
३ यतः प्रभुस्त्वदीयोहं भवामि परमेश्वरः ।
इस्रायेल् धर्म्मरूपोहं त्वदीयमुक्तिदायकः ।
तव मोचनमूल्यार्थं मिसर् दायिष्यते मया ।
सिबाकूशौ प्रदास्येते त्वदीयपरिवर्त्ततः ।
४ मद्दृष्ट्या बहुमूल्यस्त्वं मान्यः प्रीये च त्वय्यहं ।
अतस्त्वत्परिवर्त्तेन प्रतिदास्यामि मानुषान् ।

त्वत्प्राणपरिवर्त्तेन प्रतिदास्याम्यहं जनान्।
५ अहं तव सहायोस्मि तस्मात् त्वं मा भयं कुरु।
संग्रहीष्याम्यहं देशात् पूर्व्वस्मात् तव सन्ततीः।
मया पश्चिमतो देशात् संग्रहस्ते करिष्यते।
६ वदिष्याम्युत्तरं देशं त्वं तान् मयि समर्पय।
वक्ष्यामि दक्षिणं देशं त्वं स्थापय न तान् इति।
मत्पुत्रान् दूरदेशात् त्वं कन्याश्चानय भ्वन्ततः।
७ विख्याता मम नाम्ना ये महिम्नो मम ते जनाः।
प्रकाशार्थं मया सृष्टा निर्म्मिताश्चाभवन् कृताः।
८ अचक्षुषोपि ये लोका अन्धाइव भवन्ति ते।
अकर्णा बधिरा ये च तान् मनुष्यान् वहिष्कुरु।
९ मिलित्वा सर्व्वदेशीयाः कुर्व्वन्त्वागमनं जनाः।
मिलन्तु सर्व्वजातीया वचनम् एतदेव तु।
मध्ये तेषां मनुष्याणां केन पुंसा प्रकाश्यते।
भविष्यद्घटनावाक्यं अस्मान् कः श्रावयिष्यति।
निर्दोषा भवितुं ते चानयन्तु निजसाक्षिणः।
तेन ते मद्वचः श्रुत्वा सत्यमेतद्वदन्तु च॥
१० परेशः कथयेदित्थं मन्मनोनीतसेवकाः।
यूयं मां प्रत्यभिज्ञातुं संप्रत्यायितुमेव च।
अहमेवेश्वरश्चेति ज्ञापयितुञ्च साक्षिणः।

मत्पूर्व्वमपरः कश्चिदीश्वरो नहि निर्म्मितः।
इतः परञ्च कोपीह न भविष्यति निर्म्मितः।
११ चाता मदन्यो नो कश्चिद् अहमेव परेश्वरः।
१२ स्वकीयायाः कथायाश्च प्रकाशं कृतवानहं।
कृतं मया परित्राणं तत्प्रसिद्धं कृतं मया।
युष्माकं मध्य आसीच न कापि देवता पुरा।
अहमेवेश्वरश्चेति ब्रवीति परमेश्वरः।
इत्यच सकला यूयं विद्यध्वे मम साक्षिणः।
१३ अहमेवेश्वरो विद्ये कालावस्थापुरापि च।
मत्करात् मोचनं कर्त्तुं नहि कोपि क्षमो भवेत्।
साधयेयमहं यत् तत् शक्तो वारयितुञ्च कः।
१४ मुक्तिदाता च युष्माकम् इस्रायेलधर्म्मरूपकः।
इत्येतद्वचनं स्पष्टं प्रब्रवीति परेश्वरः।
युष्मत् कृते तु सैन्यानि प्रहित्य वाबिलं प्रति।
तचत्यमर्गलं सर्व्वं परिभंक्ष्याम्यहं ध्रुवं।
सुखदायकपोतेषु नमयिष्यामि कस्दियान्।
१५ युष्माकं परमेशोहं भवामि धर्म्मरूपकः।
इस्रायेल् सृष्टिकर्त्ताहं युष्माकं पृथिवीपतिः॥
१६ यः समुद्रे च पन्थानं महासागरमार्गकं।
१७ कृत्वा रथाश्वसैन्यानि वीरसंघांश्च नीतवान्।

ततस्ते सकला मग्ना नहि ते पुनरुत्थिताः।
निर्व्वाणत्वं परिप्राप्ताः पाटतन्तुषु वह्निवत्।
एतादृशप्रपरेशेन कथैषा समुदीर्य्यते।
१८ पूर्व्वकालीनकर्म्मैतत् युष्माभि र्नहि स्मर्य्यतां।
क्रियैषा न च प्राचीना युष्माभिः संविविच्यतां।
१९ वीच्छध्वमेककं कर्म्म नूतनं प्रकरोम्यहं।
इदानीमपि तत् कर्म्म समुत्पन्नं भवत्यपि।
यूयं किं तन्न जानीथ करिष्ये वर्त्म कानने।
करिष्यामि जलस्रोतस्तथाहं निर्जने स्थले।
२० ततो वन्यपशुः सर्पः पक्ष्युष्ट्रः प्रान्तरस्थिताः।
सर्व्वे प्रकाशयिष्यन्ति मामकीनं सुगौरवं।
२१ यतः स्वीयमनोनीतमर्त्या पानकृते मया।
वनमध्ये पयोऽरण्ये जलस्रोतः करिष्यते।
निजार्थं यन्मनुष्याणां मया सृष्टिः कृता पुरा।
मम प्रकाशयिष्यन्ति महिमानमिमे जनाः॥
२२ हे याकुब् न त्वयाकारि प्रार्थना मम सन्निधौ।
हे इस्रायेल् त्वया भारात् मदीयात् श्रान्तिराप्यत।
२३ मत्सन्निधिं न चानायि होमाय मेषशावकः।
स्वकीयबलिदानेन नैवाहमादृतस्त्वया।
दातुं किमपि नैवेद्यं भारो नारोपितस्त्वयि।

तथा धूपकृते न त्वां श्रमं कारितवानहं ।
२४ मह्यं वचः सुगन्धिस्त्व क्रीतो रूप्येण न त्वया ।
बलेस्त्व मेदसा नैव मम तृप्तिः कृता त्वया ।
किन्तु पापानि दत्त्वाहं भारग्रस्तः कृतस्त्वया ।
अधर्म्मेण त्वदीयेन कृतोहं क्लान्तिमांस्त्वया ।
२५ तथाप्यहं गुणैः स्वीयैरपराधं क्षमे तव ।
कलुषाणि त्वदीयानि कदापि न स्मराम्यहं ।
२६ इदानीं त्वं विवादं ते संपरिस्मारयस्व मां ।
आगच्छ त्वं मिलित्वावां विचारं कुर्व्व एकतः ।
यथा भवसि निर्दोषस्तदर्थं स्वकथां वद ।
२७ त्वदीय आदितातो यः पापानि सो ऽकरोत् पुरा ।
मद्विरुद्धं कृतं पापं त्वदीयशिक्षकैरपि ।
२८ अतो ऽध्यक्षाः पवित्रास्ते ऽपवित्रा विहिता मया ।
याकूब् मयार्पितो नाशे इस्रायेल् निन्दनेऽर्पितः ॥

४४ चतुश्चत्वारिंशोऽध्यायः ।

१ समाजं प्रतीश्वरस्य प्रतिज्ञा ९ प्रतिमानाम् असारता ९ प्रतिमानिर्म्मातॄणामज्ञानता २१ ईश्वरस्य धन्यवादं कर्त्तुं विनयकथनञ्च ।

१ हे याकूब् मम दासेय हे इस्रायेल् मनोगत ।
तथापि साम्प्रतं वाक्यं मदीयं संनिशम्यतां ।

२ त्वदीय सृष्टिकर्त्ता च गर्भेऽवयवकारकः ।
उपकर्त्ता परेशो यः स एतद्वचनं वदेत् ।
दास याकूब् मनोनीत यिशुरूण् मा भयं कुरु ।
३ यतोऽहं प्रकरिष्यामि तोयवर्षं सहज्भुवे ।
स्रोतांसि सलिलानाञ्च विधास्ये शुष्कभूमिषु ।
स्वात्मानं त्वदपत्येभ्यो दास्ये वंशेभ्य आशिषं ।
४ तेन यथा तृणं द्रुश्च रोपितस् स्रोतसन्निधौ ।
तथैव मनुजास्ते च परियास्यन्ति वर्द्धुणं ।
५ परमेशस्य लोकोऽहमिति कश्चिद् वदिष्यति ।
याकूबो नामतः कोऽपि प्रविख्यातो भविष्यति ।
कश्चित् परेशमुद्दिश्य स्वाचरं प्रकरिष्यति ।
इस्रायेल्नामतः कश्चित् प्रसिद्धश्च भविष्यति ॥
६ इस्रायेलीयराजा च परेशस्तस्य मुक्तिदः ।
सैन्याध्यक्षपरेशः स इति वाक्यं समावदेत् ।
अहमादिरहञ्चान्तो मद्भिन्नः कोऽपि नेश्वरः ।
७ घटनावर्णनं केन मयेव प्रकरिष्यते ।
आदिकालिकलोका ये तदेव स्थापनावधि ।
तत्प्रकाशं प्रकुर्व्वन्तु प्रकुर्व्वन्तु निरूपणं ।
तर्हि ते वर्त्तमानस्य भविष्यद्घटनस्य च ।
मदीयसन्निधौ सम्यक् प्रकुर्व्वन्तु प्रकाशनं ।

८ यूयं कुरुत मा भीतिं मा भवेत ससाध्वसाः ।
पूर्व्वकालात् मया किन्न युष्मभ्यं संप्रकाशितं ।
न दर्शितञ्च यूयन्तु विद्यध्वे मम साक्षिणः ।
मदन्य ईश्वरः कोऽस्ति कोप्यवश्यं न विद्यते ।
पुनः सत्याश्रयश्चैव नाहं जानामि कञ्चन ॥
९ प्रतिमातक्षकाः सर्व्वे असारा एव मानवाः ।
नास्ति तेषां फलं किञ्चित् सुन्दरप्रतिमागणे ।
ते लज्जन्तां न किञ्चित्ताः पश्यन्ति न विदन्ति च ।
एतदेव निजार्थं तैः साक्षित्वं परिदीयते ।
१० निर्म्मान्ति देवमूर्त्तिं ये प्रतिमां स्थापयन्ति ये ।
लज्जितास्ते भविष्यन्ति सहायाः तस्य सर्व्वशः ।
११ विवर्णं वदनं भावि तदीयशिल्पकारिणां ।
उपस्थास्यन्ति ते सर्व्वे मिलित्वा युगपत् जनाः ।
एकदा परिभेष्यन्ति लज्जिष्यन्ते च ते जनाः ।
१२ कर्म्मकृत् गठितुं पर्शुमङ्गारे संतपेद्यः ।
द्रुघनेन तदीयं हि करोत्याकृतिमेव च ।
तच स्वकीयहस्तस्य बलञ्च संप्रकाशयेत् ।
क्षुधित्वा याति दौर्ब्बल्यं क्लान्तिश्चाजलपानतः ।
१३ वर्द्धकि र्मनुजस्तत्र सूत्रपातं करोति यः ।
तस्याकारस्य चिह्नञ्च लौहास्त्रेण करोति सः ।

अस्त्रेण च सुतीक्ष्णेण तत्तु कर्म्म करोति सः ।
करोति सममानेन तदाकारप्रमाणकं ।
स्वकीयभवने तस्याः परिसंस्थापनाय च ।
मनुष्याकारसौन्दर्य्यानुसारेण करोति तत् ।
१४ स्वकार्य्यस्य निमित्तं स एरसवृक्षं छिनत्ति च ।
तर्सामल्लोनद्रुमस्यापि परिग्टह्नाति मानुषः ।
वन्यवृक्षेषु वृक्षैकं गाढं कुर्य्यात्मनोगतं ।
१५ ओरन् द्रुमे रोपिते च वृष्ट्या संपालिते सति ।
अधिकारो भवत्येव तद्दग्धकरणे नृणां ।
स तस्य किञ्चिदादाय वह्निं संज्वालयत्यपि ।
तेन सन्ताप्य चुल्लीञ्च पूपपाकं करोति सः ।
तेनैव देवतैकाया निर्म्माणं प्रकरोति च ।
तामेव भजते तस्याः सम्मुखे दण्डवद् भवेत् ।
१६ तथा तदीयकिञ्चिच्च क्षयानौ परिदाहयेत् ।
तदीयकियता मांसं पक्का च परिभक्षति ।
तृप्यते मांसपाकेन तथा तत्कियता च सः ।
वह्निं संताप्य संब्रूयादहमुष्णो भवामि च ।
अहो अहमिदानीं हि क्षयानुं परिदृष्टवान् ।
१७ आतेष्वेस्ववशिष्टं यत् तेनैकामपि देवतां ।
निर्म्माय तच्चितां मूर्त्तिं तां नमेत् पूजयेच्च तां ।

पुनस्तस्याः समीपे स प्रार्थ्य वाक्यमिदं वदेत् ।
मां निस्तारय यस्मात् त्वं मदीया देवता भवेः ।
१८ न ते विदन्ति बुध्यन्ते तन्नेत्रे मुद्रिते नहि ।
पश्यन्ति सुप्तचित्तास्ते बुध्यन्ते नहि किञ्चन ।
१९ यदीयखण्डमेकं हि मया संपरिज्वाल्य च ।
अङ्गारेषु तदीयेषु पूपानां पचनं कृतं ।
तथा मांसस्य पाकञ्च कृत्वाहं परिभुक्तवान् ।
इदानीं तस्य काष्ठस्य शेषेणार्त्तनमूर्त्तिकां ।
निर्म्माय वृक्षमूलाय प्रणंस्यामि च दण्डवत् ।
मनसेत्थं विवेक्तुञ्च तथा कथयितुं वचः ।
नहि तेषां मनुष्याणां ज्ञानं बुद्धिश्च जायते ।
२० भक्षत्येष जनो भस्म भ्रमयेत् तन्मनश्च तम् ।
नहि प्राणान् स्वकीयान् स समुद्धारयितुं क्षमः ।
मम दक्षिणहस्ते किं संभ्रान्ति र्नहि विद्यते ।
एतां वाणीञ्च वक्तुं स नहि शक्नोति मानुषः ॥०
२१ हे याकूब् हे त्वमिस्रायेल् एतेषां स्मरणं कुरु ।
यतस्त्वं मम दासोऽसि दासायास्त्वन्यथा मया ।
हे इस्रायेल् अतस्त्वान्तु विस्मरिष्याम्यहं नहि ।
२२ आशालग्न स्त्वदीयस्तु मया निविडमेघवत् ।
मेघवत्तव पापञ्च मयैव परिमोक्ष्यते ।

परावर्त्तस्व मह्यं त्वं यतस्ते मुक्तिदोऽस्म्यहं।
२३ आकाशमण्डले संस्था यत् करोति परेश्वरः।
निमित्तं तस्य युष्माभि र्गीतगानं विधीयतां।
नीचस्थानानि मेदिन्याः कुरुतानन्दजं ध्वनिं।
वनानि पर्व्वतास्तेषां मध्यसंस्थितपादपाः।
मिलित्वा सकला यूयं गीतं गायत सर्व्वदा।
यतः परेशो याकूबो विधाय परिमोचनं।
इस्रायेलीयमध्येषु भविष्यति प्रसंशितः।
२४ येन त्वं जठरस्थान्तः प्रथमं परिनिर्म्मितः।
सएव मुक्तिदाता ते परमेश इदं वदेत्।
स्रष्टा सर्व्वं य एकाकी नभोबिम्बं व्यवास्तरत्।
विस्तीर्णा पृथिवी येन स एवाहं परेश्वरः।
२५ करोति निस्फलं वाक्यं स मृषाभाविवादिनां।
गुणिनो मनुजान् कुर्य्यात् स एवोन्मत्तसन्निभान्।
प्रमुषीं ज्ञानिलोकानां विपरीतां करोति सः।
ज्ञानं तेषां मनुष्याणां करोति मूर्खतासमं।
२६ वाक्यं स्वकीयभक्तस्य निश्चितञ्च करोति सः।
मन्त्राणां निजदूतानां सुसिद्धिं विदधाति सः।
अत्र युक्तो वसत्येति स यिरूशालमं वदेत्।
यिहूदानगरं वक्ति त्वन्तु संनिर्च्चितं भव।

देशशून्यस्थलं यत् तत् करिष्येहं जलाशयं।
२७ वक्ति तोयं गभीरस्थ त्वन्तु शुष्कीभवेति सः।
त्वदीयाः सरितः सर्व्वाः करिष्यामि च निर्जलाः।
२८ खसं वदेत् मदीयस्त्वं नियुक्तो रक्षको भवेः।
अभिप्रायं मदीयं त्वं सर्व्वं सिद्धं करिष्यसि।
त्वं यिरूशालमं ब्रूहि भविता ते निचायनं।
मन्दिरं ब्रूहि ते भित्तिमूलं संस्थापयिष्यते॥

४५. पञ्चचत्वारिंशोऽध्यायः।

१ निजलोकानां रक्षार्थं बाबिलस्य विनाशार्थं खसस्योत्थापनं ८ खसस्य रक्षणं तस्य कर्म्मणः सफलीकरणं १९ देवतानां निष्फलत्वञ्च।

१ निजाभिषिक्तखसाय वदेदेतत् परेश्वरः।
तदीयदक्षिणं हस्तं परिगृह्णन्नहं स्वयं।
तदग्रे परदेशीयान् करिष्यामि पराजितान्।
कटिबन्धं नृपाणाञ्च करिष्यामि विमोचितं।
द्वारं मुक्तं करिष्यामि कपाटद्वयसंयुतं।
नहि तेनैव तद्द्वारं पुनर्बद्धं भविष्यति।
२ करिष्यामि त्वदग्रेहम् उच्चनीचायनम् ऋजु।
पित्तलीयं कपाटञ्च परिभंक्ष्यामि निश्चितं।
परिकर्त्स्याम्यहं सम्यग् अर्गलं लोहनिर्म्मितं।
३ अन्धकारस्थितं वित्तम् अप्रकाशस्थलस्थितं।

अतीवगुप्तं वित्तञ्च तुभ्यं दायिष्यते मया।
परेश्वरोऽहमेवेति त्वदीयनामकारकः।
इस्रायेलीय ईशोऽहमिति ज्ञास्यसि वेदितुं।
मम दासस्य याकूबो मनोनीतस्य मे तथा।
इस्रायेलो निमित्तञ्च तव नाम मया कृतं।
अहं त्वया न बुद्धोऽपि त्वां ख्याख्यापयं पुरा।
५ अहमेव परेशः स्यां नापरः कोऽपि विद्यते।
मदन्य ईश्वरः कोऽपि मेदिन्यां नहि विद्यते।
त्वयाऽहं नाप्यभिज्ञात समबध्नां कटिं तव।
६ मदन्य ईश्वरः कोऽपि नास्तीति भास्करोदयात्।
यावद् दिशं प्रतीचीञ्च लोका ज्ञास्यन्ति निश्चितं।
अहमेव परेशः स्यां मां विना नापरोऽस्ति च।
७ मयैव सृज्यते दीप्तिरन्धकारश्च जन्यते।
अहं करोमि सन्धिञ्च विपदं जनयाम्यहम्।
क्रियन्ते सर्व्वकर्म्माणि मयैव परमेशिता॥
८ तुहिनं प्रतिवर्षं त्वं हे नभोमण्डलोर्द्धतः।
अभ्राणां निवहो धर्म्मं वृष्टिधारां करोतु च।
समुत्पादयतां त्राणं दीर्य्यमाणा वसुन्धरा।
धर्म्मएवाङ्कुरं कुर्य्यात् तत्स्रष्टाहं परेश्वरः।
९ परिनिर्म्मित आसीद् यो मृत्तिकाघटवज्जनः।

स्रष्ट्रा विरोधकारी य स्तत्सन्तापो भविष्यति ।
किं निर्म्मासि त्वदित्थं किं कुलालं वदितुं क्षमा,।
नहि हस्त स्तवास्तीति किं कर्म्मकारकं वदेत् ।
१० किं त्वं जनयसीत्येवं यो जनो जनकं वदेत् ।
त्वं किं प्रसूयसे चैतत् यो जनो जननीं वदेत् ।
उभयोरेतयोरेव सुसन्तापो भविष्यति ।
११ इस्रायेल् धर्म्मरूपो य स्तदीयसृष्टिकारकः ।
एतादृशं वचो ब्रूयात् सएव परमेश्वरः ।
भाविनीं घटनां यूयं मत्समीपे: किमु पृच्छथ ।
मद्धस्तकृतकर्म्माधि किमाज्ञां संविधत्त च ।
१२ मया सृष्टा धरा तस्या मध्यस्था निर्म्मिता नराः ।
तथा स्वकीयहस्तेन व्यस्तारि गगणं मया ।
तस्य सैन्यस्वरूपाणि भानि चाज्ञापितानि तु ।
१३ मया स धर्म्मरूपेण समुत्पन्नः करिष्यते ।
तदीयं सकलं मार्गं सरलञ्च करिष्यते ।
तथा पुरं मदीयं स परिनिर्म्मास्यति स्वयं ।
स विना पारितोषेण विना मूल्येन मे जनान् ।
वन्दिनः सकलानेव परिमुक्तान् करिष्यति ।
१४ सैन्याध्यक्षपरेशेन वच एतन्निगद्यते ।
पुनः परेश्वरोवक्ति सम्पत्ति र्मिसरोद्भवा ।

कूशो वाणिज्यविनिमयश्च दीर्घकायाः सिबायिकाः ।
लोकाः सर्व्वे भविष्यन्ति त्वदीयकार्य्यसेविनः ।
तव पश्चाद् गमिष्यन्ति ते बन्धनस्थ मानवाः ।
गमनं ते करिष्यन्ति सर्व्वे शृङ्खलसंयुताः ।
इत्थं निवेदयिष्यन्ति त्वां प्रणम्य च ते जनाः ।
ईश्वरः परिविद्येत केवलं सहितस्त्वया ।
विना तमपरः कोपि चिन्तावोद्धा न विद्यते ।
१५ इस्रायेल्स्त्रातरीशस्त्वं बोधागम्यस्त्वमीश्वरः ।
१६ सर्व्वे लज्जां गमिष्यन्ति मूर्त्तिनिर्म्माणकारकाः ।
विवर्णाश्च भविष्यन्ति विवर्णास्त्वपयैकदा ।
१७ किन्त्विस्रायेल् परेशेनानन्तत्राणमवाप्स्यति ।
न लज्जिता विवर्णा वानन्तकाले भविष्यथ ।
१८ अन्तरीक्षस्य स्रष्टा यो भाषते स परेश्वरः ।
अर्थाद् य ईश्वरः स्रष्टा पृथिवीं परिनिर्ममे ।
अकरोत् स्थापनं तस्या न तां शून्यां समासृजत् ।
वसतिस्थान जायेत तस्मात्तां स व्यासृजत् ।
केवलः परमेशोऽहं मदन्यो नहि विद्यते ।
१९ अहं स्थाने विविक्ते च स्थले भून्यास्तमोमये ।
भविष्यद्वचनं किञ्चित् नाभिभाषितवानहं ।
गवेषणं मदीयन्तु युष्माभिः क्रियते मुधा ।

इदं वाक्यमहं नाख्यं याकूबवंशं कदाचन।
सत्यभाषिपरेशोऽहं सत्यवाक्यं वदामि च॥

२० रक्षिता अन्यदेशेभ्यो यूयमेत्योपतिष्ठत।
क्षतं स्वकीयहस्ते यैं काष्ठं वहन्ति मानवाः।
प्रार्थयन्ते च तान् देवान् य उद्धर्त्तुं नहि क्षमाः।
ते सर्व्वे मनुजाएव नहि जानन्ति किञ्चन।

२१ तान् मनुष्यान् समाचक्ष्व समागच्छन्तु सन्निधिं।
परस्परं प्रकुर्व्वन्तु मन्त्रणामपि ते नराः।
घटनातः पुरा वाक्यमिदं केन प्रवेदितं।
यं विना नेश्वरः कोपि नाकार्षं तत् परेश्वरः।
तथा येन विना कश्चिदीश्वरो नहि विद्यते।
सत्योऽहं मुक्तिदाताहमद्वितीयोऽहमीश्वरः॥

२२ पृथिव्यन्तस्थिता लोका मां दृष्ट्वा त्राणमाप्नुत।
यतोऽहमीश्वरो मत्तो नापरः कोपि विद्यते।

२३ स्वीयं नाम उद्दीला च शपथं करवाण्यहं।
निर्गच्छेन्मन्मुखात् सत्यम् अमोघं वाक्यमेव च।
जानुपातं करिष्यन्ति मदग्रे सर्व्वमानवाः।
जिह्वाभिः शपथं कृत्वा वक्ष्यन्ति वाक्यमीदृशं।

२४ मम धर्म्मश्च शक्तिश्च केवलोस्ति परेश्वरः।
आरुष्यन् मयि ये लोका एत्य प्राप्स्यन्ति ते त्रपां।

२५ इस्रायेलो ऽन्वया ये ये ते सर्व्वे परमेश्वरात् ।
सपुण्या गणयिष्यन्ते प्रशंसिष्यन्ति तद्गुणान् ॥

४६ षट्चत्वारिंशोऽध्यायः ।

१ बाबिलस्थानप्रतिमायाश्च विनाशः ३ ईश्वरीयलोकानां रक्षा प्रतिमानाम् अपारता ८ विवेकं विनयकथनं १२ परित्राणकथनञ्च ।

१ बेल् नमति निबोश्चाधोवदनो जायते भुवं ।
स्थाप्यन्ते प्रतिमास्तेषां पशुजन्तुगणोपरि ।
ते सर्व्वे पशवः क्रान्ता भारग्रस्ता भवन्ति च ।
२ भारं न सहमानास्ते सर्व्वे नम्रीभवन्ति च ।
बन्धावस्थां समाश्रित्य दूरदेशं प्रयान्ति च ॥
३ इस्रायेलवंशशेषा हे याकूब्वंशाश्च सर्व्वशः ।
यद्वाक्यं मामकीनं तद् युष्माभिः संनिशम्यतां ।
आजन्मकालतो युष्मद्वहनं कृतवानहम् ।
आगर्भस्थितिकालाच्च युष्मान् स्कन्धे वहाम्यहं ।
४ युष्मद्वार्द्धक्यपर्य्यन्तं प्रकरिष्याम्यहञ्च तत् ।
केशानां पचनं यावत् करिष्ये वहनं तव ।
समकारि मया पूर्व्वं युष्माकीनन्तु सर्जनं ।
अतः स्कन्धे वहन् युष्मान् करिष्यामि सुरक्षणं ॥
५ यूयं मां सदृशं केन समानं वा करिष्यथ ।
उपमास्यथ मां केन सादृश्यार्थं परस्परं ।

६ कोषान्निर्गमयन्ते स्वर्णं तुलया तोलयन्ते जनैः ।
निर्म्मांति देवतां तेन दत्तभर्म्मस्तु स्वर्णकृत् ।
जानुपातं तदग्रे ते कुर्व्वन्ति च तदर्च्चनं ।
७ लोकस्कन्धे मनुष्यैस्ते स्वदारुः संविधीयते ।
स्थापितायां निजस्थाने तत्रैव परितिष्ठति ।
किन्तु स्वस्थानतो नैव गमनं प्रकरोति सा ।
केनचित् प्रार्थिता सापि नोत्तरं परियच्छति ।
विपद्ग्रस्तं न तं लोकं समुद्धरति सा क्वचित् ॥
८ हे पापिमनुजाः सर्व्वे कुरुत तस्य संस्मृतिं ।
पुरुषत्वं निजं यूयं प्रकाशयत सर्व्वथा ।
अस्मिन् कार्य्ये विशेषेण मनांसि प्रणिधत्त च ।
९ कार्य्यं स्मरत पूर्व्वीयम् अवश्यमहमीश्वरः ।
अहमेवेश्वरः कोपि मत्समो नहि विद्यते ।
१० शेषीयघटनावाक्यं पूर्व्वमेव प्रकाशये ।
नोपस्थितमिदानीं यत् तच्च पूर्व्वं प्रचारये ।
अहं वाचमिमां वच्मि मन्मन्त्रणा सम स्थास्यति ।
यदहं परिवाञ्छामि तत्तु सिद्धं करोम्यहं ।
११ पूर्व्वस्या दिशतश्चाहम् उत्क्रोशन्तु विहङ्गकं ।
अर्थात् नरं परान्तस्थम् आह्वाये दूरदेशतः ।
मया यथा समभाषि करिष्ये घटनां तथा ।

यन्मया निश्चितं चित्ते साधयिष्ये तदेव हि ॥
१२ कठोरमनसो यूयं हे धर्म्माद् दूरवर्त्तिनः ।
मदीयं वचनं सर्व्वे शृणुत सावधानतः ।
१३ करिष्ये निकटं धर्म्मं न स्थास्यति स दूरतः ।
मया कृते परित्राणे विलम्बो न भविष्यति ।
दास्ये त्राणं सियोनेऽहम् इस्रायल्गौरवाय वै ॥

## ४७ सप्तचत्वारिंशोऽध्यायः ।

१ बाबिलो बाबिलस्य तस्य नानाविधदण्डाश्च ।

१ अवरूढे बाबिलो धूलिरजस्सूपविशतां ।
कल्दीयकन्यके भूमावुपविशासनं विना ।
यतस्त्वां कोमलामुक्ता सुखस्य परिभोगिनीं ।
नहि कश्चिन्मनुष्यस्त्वां पुनः सम्बोधयिष्यति ।
२ ग्टहाण पेषणीं तच्च गोधूमं परिपिण्ढि च ।
कुरु केशानगाच्छादान् पादवस्त्रं समुत्क्षिप ।
अनाच्छाद्य निजे जङ्घे धुनीमध्येन संव्रज ।
३ द्योतिष्यते च नग्नत्वं दृश्यते ते त्रपास्पदं ।
पूर्णं प्रतिफलं दास्ये ऽविश्वासि नहि कश्चन ॥
४ अस्माकं मुक्तिदाता यः सैन्याधिपपरेश्वरः ।
इस्रायेलो धर्म्मरूप इति तन्नामधेयकं ।
५ कल्दीयकन्यके ध्वान्ते मौनवा समुपाविश ।

यत् त्वं प्रजानां मातेति ख्यातिं नहि प्रयास्यसि ।

६ अहं क्रुध्यन् स्वलोकेभ्यः स्वाधिकारममेध्ययन् ।
तव हस्ते च तानेव लोकानपि समार्पयं ।
किन्तु त्वं तेषु लोकेषु नह्यकार्षीः कृपालवं ।
विशेषाद् वृद्धलोकेषु युगं गुरु त्वमर्पयेः ।

७ अहं माता भविष्यामीति च संभाषितं त्वया ।
तुभ्यं घटिष्यते यत् तत् चिन्तितं नच न स्मृतं ।

८ हे सुखभोगिनीदं त्वं वचनं संनिशामय ।
निरापदा प्रतिष्ठन्त्या मनस्येतत् त्वया कृतं ।
अस्म्यहं मत्परा नास्ति वैधव्यञ्च न भावि मे ।
न च पुत्त्रविहीनात्वं भविष्यति कदापि मे ।

९ किन्तु ते भूरिमन्त्रेषु विद्यासु मोहनासु च ।
एकदैकनिमेषे ते वैधव्यवंशनाशने ।
ते उभे त्वां समुद्दिश्य क्षिप्रमेव घटिष्यतः ।

१० विश्वस्य निजदुष्टत्वे ऽवादी मां कोपि नेक्षते ।
त्वन्तु ज्ञानेन बुद्ध्या च भ्रमिता दुष्टवर्त्मना ।
अवादीरहमेवास्मि मदन्यो नहि विद्यते ।

११ अतएव समुद्दिश्य त्वां विपद्राचिरेष्यति ।
नहि प्रभातकालस्य वीक्षणं प्रकरिष्यसि ।
प्रायश्चित्तं न तस्याहि दुर्दशा या घटिष्यते ।

त्वामुद्दिश्य हठादेव विनाश आगमिष्यति।
कमप्यनुभवं तस्य कर्त्तुं त्वं नहि शक्ष्यसि।
१२ त्वया मोहनमन्त्राद्यैरश्रामि यौवनावधि।
तानि कर्म्माणि कर्त्तुं त्वं प्रवृत्ता संभवाधुना।
को वेत्ति तेन ते भावी सोपकारो विपत्क्षयः।
१३ क्षीयानेकपरामर्शै यदि त्वं क्लान्तिमेषि च।
तर्हि ज्योतिर्विदो लोका नक्षत्रदर्शिनो जनाः।
घटनां प्रतिदर्शं तां ये जना ज्ञापयन्ति च।
तुभ्यं यद् घटितव्यं त्वां ततो रक्षन्तु ते जनाः।
१४ पश्यत मनुजाः सर्व्वे संभविष्यन्ति नाडवत्।
हुताशनस्य तान्लोकान् प्रकरिष्यति भस्मसात्।
तेजसोऽग्नेर्न ते प्राणान् क्षीयान् शक्ष्यन्ति रक्षितुं।
उष्णार्थमग्नितापार्थं न स्थानाङ्गारएककः।
१५ त्वया यै मानुषैः सार्द्धं समकारि परिश्रमः।
बाल्याद् आ यौवनाद् येषु वाणिज्यं विहितं त्वया।
ते मानवा भविष्यन्ति तादृशाएव निश्चितं।
एकैकस्तामनुद्धार्य्य यास्यति स्वस्ववर्त्मनि॥

---

## ४८ अष्टचत्वारिंशोऽध्यायः ।

१ निजलोकान् प्रति परमेश्वरस्य भर्त्सनं १२ विनयकथनं १७ खेदकथनं २० मोचितलोकगानञ्च।

१ हे याकूबवंशा यूयं शृणुत भारतीमिमां ।
इस्रायेल्नामविख्याता यिहूदाम्बवोद्भवाः ।
लोकानाम्ना परेशस्य युष्माभिः परिशप्यतां ।
इस्रायेलीश्वरं यूयं स्वीकुरुध्व प्रकाशतः ।
किन्तु सत्यस्वरूपेण याथार्थ्येन च नो भवेत् ।
२ विद्यते यं सुविख्यातः धर्म्मीयनगराख्यया ।
यस्य नाम च सैन्यानाम् अध्यक्षः परमेश्वरः ।
इस्रायेलीश्वरे तस्मिन् प्रत्याशा क्रियतां त्वया ।
३ पूर्व्वकालस्य यद्वाक्यं ज्ञापितत्वं मयाहितः ।
मदीयवक्त्रात् तत्तु निर्गत्य संप्रकाशितं ।
तस्मिन् क्षिप्रं कृते सिद्धं तत् सर्व्वं समुपस्थितं ।
४ ग्रीवास्नायवस्तु युष्माकं कठिनाः सन्ति च लौहवत् ।
पित्तलेन समं भालं मदीयमिति वेद्म्यहं ।
इतिहेतोरहं तत् त्वाम् आहितः समदर्शयं ।
५ यतस्त्वा मदीयेन दैवतेन कृता क्रिया ।
तक्षिता च निषिक्ता मे प्रतिमैतत् समादिशत् ।
इति वाक्यं यथा नैव त्वया समभिभाष्यते ।

मद्धर्म्मेयं तदर्थं त्वां समुपस्थितिपूर्व्वकः ।
६ त्वया श्रुतानि यान्येव तानि सिद्धानि सर्व्वशः ।
अङ्गीकारस्तु युष्माभि र्मे किं तस्य करिष्यते ।
इतः परं सुगुप्तं यत् तव ज्ञानबहिःस्थितं ।
नवीनं वचनं यच्च त्वामहं श्रावयामि तत् ।
७ मया तत् सकलं ज्ञातं यथेत्थं नोच्यते वचः ।
तदर्थमेव पूर्व्वं तत् सिद्धत्वं न मयाख्यति ।
इदानीं श्रवणात् पूर्व्वं तव तत् सिद्धतां गतं ।
८ अश्रूयत त्वया तन्न न चाज्ञायत तत् त्वया ।
अब्दयद्यौ त्वदीयौ द्वौ मुक्तावास्तां न चाहितः ।
यतो विश्वासघाती त्वम् आजन्मेश्वरवर्जकः ।
इत्येतन्नामधारीति मया समभिविद्यते ।
९ युष्मान् यथा न सम्पूर्णं समुच्छिन्नान् करोम्यहं ।
संवरीष्ये तथा क्रोधं स्वकीयाख्यानुयेन तु ।
स्वगौरवाय युष्मत्तो मया स वारयिष्यते ।
१० पश्य युष्मत्परिष्कारं करिष्यामि कृशानुना ।
युष्मांश्च दुःखमूषायां परीक्षिष्ये न रूप्यवत् ।
११ निजार्थं स्वार्थमेवाहं तत् करिष्यामि निश्चितं ।
कुतो नाम मदीयं यत् तद् भविष्यति निन्दितं ।
मयान्यस्मै प्रदास्यामि महिमानमहं निजं ॥

१२ मद्वाक्यं त्वमिस्रायेल् याकूब् च मद्वचः शृणु ।
स एवाहमहमादिरहमन्तस्वरूपकः ।
१३ भित्तिमूलं पृथिव्यास्तु हस्तेन स्थापितं मया ।
मया दक्षिणहस्तेन नभोविम्बं सुविस्तृतं ।
आहूतेषु मया तेषु सूपतिष्ठन्ति ते ध्रुवं ।
१४ युष्माभिः सकलैरेव सम्भूय श्रूयतामिति ।
यस्मिन् परेश्वरः प्रेम करोति पुरुषः स तु ।
साधयिष्यति तस्यैव बाबिलं प्रति मानसं ।
पराक्रमं तदीयञ्च कस्दीयमानवान् प्रति ।
यः पूर्व्वमिदमाख्यानं प्रचारयति तादृशः ।
मध्ये देवसमूहस्य को जनः परिविद्यते ।
१५ मयेदानीं समाचक्षि तमाह्वयामि च ।
अतएवायने तस्य भविष्यति सुमङ्गलं ।
१६ मत्समीपं समागत्य यूयं शृणुत मद्वचः ।
अहं प्रथमतः क्वापि प्रोक्तवान् गोपने नहि ।
करोमि नियमं तस्य तदीयघटनात् पुरा ।
प्रभुः परेश्वरस्तस्यात्मानं मां प्रति प्रेरयेत् ॥
१७ तव मुक्तिप्रदाता च इस्रायेलधर्म्मरूपकः ।
तेनैव परमेशेन वाक्यमेतन्निगद्यते ।
तवाभर्जनिकां शिक्षां य एव प्रतिपादयेत् ।

तव गन्तव्यमार्गेण त्वां यः संयापयत्यपि ।
परमेश्वर एवाहं सएव च प्रभुस्तव ।
१८ आज्ञा यदि मदीया या त्वया सा समसंस्यत ।
अभविष्यन्नदीरूपं त्वदीयं मङ्गलं तदा ।
अभविष्यञ्च ते धर्म्मः समुद्रस्य तरङ्गवत् ।
१९ अभविष्यत् त्वदीयोऽपि वंशोऽपि सिकतासमः ।
यथा तस्योदरोत्पन्ना अभविष्यन् तथा तव ।
त्वदीयं नामधेयं यत् तन्न चास्थति लुप्ततां ।
मदीयवदनाग्रेव तव नामाप्यलोप्स्यत ॥
२० बाबिल्नगरतो यूयं प्रकुरुध्वं विनिर्गमं ।
तथा कस्दीयदेशाञ्च कुरुत प्रपलायनं ।
मोचयिष्यति याकूबं स्वदासं परमेश्वरः ।
उच्यतामिति वाक्यञ्च सानन्दं तत् प्रकाश्यतां ।
तत् प्रचार्य्य च मेदिन्याः सीमां यावत् निशम्यतां ।
२१ यत् प्रान्तरेण तान्लोकान् परमेशो नयिष्यति ।
तृष्णायुक्ता भविष्यन्ति तुच्छ स्थाने न ते जनाः ।
यतस्तेषां निमित्तं स गिरेः स्रोतः करिष्यति ।
पाषाणे भेदिते तेन सलिलं निर्गमिष्यति ।
२२ शुभं भवेन्न दुष्टानामिति वक्ति परेश्वरः ॥

## ४९ ऊनपञ्चाशोऽध्यायः ।

१ यिहूदीयानां त्राणवर्णनं ७ अन्यदेशीयानां पालनं १७ समाजे परमेश्वरस्य स्नेहः २२ तस्य सुखं २४ शत्रूणां विनाशश्च ।

१ हे दूरदेशिनो लोकाः शृणुत वचनं मम ।
मनो निधत्त मद्वाक्ये हे दूरस्थितमानवाः ।
मद्गर्भस्थितिमारभ्य परेशो मां समाह्वयत् ।
मम नाम धृतं तेन मन्मातृकुक्षिनिर्गमात् ।
२ तीक्ष्णखड्गस्वरूपं स कृतवान् वदनं मम ।
छायायां निजहस्तस्य तेनाहं परिगोपितः ।
न्यदधान्मां निजे तूणे कृत्वा शाणितबाणवत् ।
३ इस्रायेल् मम दासस्त्वं महिमा ख्यास्यते त्वया ।
४ ततो मयेदं गदितं हा मे पण्डोऽभवत् श्रमः ।
निरर्थकं मया सर्व्वं मदीयं व्ययितं बलं ।
तथापि मे विचारोऽस्ति सहितः परमेशिना ।
मम कर्म्मफलञ्चास्ति सार्द्धं मत्परमेशिना ।
५ यो याकूबं पुनर्व्वारम् आनेतुं निजसन्निधिं ।
माञ्च स्वसेवकीकर्त्तुं गर्भे निर्म्मितवांश्च यः ।
तेनेदानीं परेशेन वाक्यमेतन्निगद्यते ।
तत्सन्निधौ यदीस्रायेल् संगृहीतो भवेन्नहि ।
समक्षं परमेशस्य प्रादरिष्ये तथाप्यहं ।

तथा मदीय ईशो मे बलरूपो भविष्यति।
इति हेतोरिदं तेन वचनं संनिगद्यते।
६ याकूबीयस्य वंशस्य समुत्पादनकारणं।
इत्यायेन् मनुलोकानां सतेजस्कत्वकारणं।
यद्भवे मम दासस्त्वं तत् तुरं तव जायते।
दीप्तिरूपं करिष्यामि त्वामन्यदेशवासिनां।
सीमां यावत् पृथिव्यास्तु त्राणं मत्कृतमेव च॥
७ यो जनो निन्दितो लोके घृणितो योऽन्यदेशिभिः।
अध्यक्षाणां वशीभूतस्तमेव परमेश्वरः।
इत्यायेन् धर्म्मरूपस्य मोक्षदः संवदेदिति।
विश्वास्य परमेशस्य तन्मनोनीतकारिणः।
इत्यायेतस्य धर्म्मस्य निमित्तं भूमिपालकाः।
उत्थास्यन्ति च तं दृष्ट्वा सेविष्यन्तेऽधिपाश्च तं।
८ एतदेव परेशेन वचनं परिभाष्यते।
संश्रोष्यामि शुभे काले त्वदीयां प्रार्थनामहं।
उपकारं करिष्यामि परित्राणदिने तव।
कर्त्तुं शान्तिस्तु देशस्याधिकर्त्तृत्व निरामयं।
९ वहि-र्याहीति वाक्यस्य वदितुं बन्दिनो जनान्।
प्रत्यक्षो जायतास्वेति वक्तुं ध्वान्ते स्थितान् जनान्।
नियोच्चे निम्नमार्गेण तृप्तां त्वां परिरक्ष्य च।

मार्गस्य सन्निधौ सर्व्वे चरिष्यन्ति च ते जनाः ।
उच्चस्थाने नृणां तेषां गोष्ठस्य संभविष्यति ।
१० क्षुधायुक्ता तृषायुक्ता न भविष्यन्ति ते जनाः ।
न च ते ग्रीष्मरौद्राभ्यां भविष्यन्ति समाहताः ।
यतस्तान् दयते यस्तु सएव नेष्यते च तान् ।
कवन्धप्रस्रवस्यैव समीपं नेष्यते च तान् ।
११ सर्व्वेषु निजशैलेषु समं वर्त्म करिष्यति ।
स्वकीयान् राजमार्गांश्च प्रोच्छ्रितान् प्रकरिष्यति ।
१२ पश्यैते दूरतो देशात् करिष्यन्ति समागमं ।
पश्चोत्तराप्रतीचीभ्याम् आयास्यन्ति जना इमे ।
आगमिष्यन्ति सीनीमो देशतो मानवा इमे ॥
१३ हे नभोमण्डले संस्था यूयं गीतं प्रगायत ।
महानन्दध्वनिं कुर्य्यास्त्वञ्चापि हे वसुन्धरे ।
सर्व्वे शिलोच्चया यूयं गीतानि परिगायत ।
यतः परेश्वरः स्वीयान् मनुष्यान् सान्त्वयिष्यति ।
स्वकीयदुःखिलोकेषु करुणां स करिष्यति ।
१४ किन्तु सियोन् इदं वक्ति मामत्याक्षीत् परेश्वरः ।
मदीय ईश्वरो योऽस्ति सोऽपि मां पर्य्यविस्मरत् ।
१५ योषित् स्वगर्भजे बाले स्नेहं सम्प्रविधाय न ।
स्वस्तन्यपायिनं बालं किं विस्मर्त्तुमलं भवेत् ।

विस्मरिष्यामि नाहं त्वां विस्मरन्त्यपि योषितः।
१६ पश्य हस्ततले स्वीये तवाकारं समालिखं।
आस्ते त्वदीयप्राचीरं सदा मद्दृष्टिगोचरे।
१७ क्षिप्रमेवागमिष्यन्ति तव निर्म्माणकारिणः।
तव मध्यात् प्रयास्यन्ति शून्यकारास्तु नाशकाः।
१८ त्वं लोचने समुन्मील्य चतुर्दिशः समीक्षतां।
एते सर्व्वे सुसम्भूय समेष्यन्ति तवान्तिकं।
उच्यते परमेशेन भवेयममरो यदि।
तदा भूषणतुल्यानि सर्व्वाणि परिधास्यसि।
कन्यानां भूषणानीव सर्व्वाणि धारयिष्यसि।
१९ यतः स्थानं त्वदीयं यत् समुच्छिन्नं पुराभवत्।
अभूत् शून्यं स्थलं यत्ते भूमिर्नष्टा च या तव।
सङ्कीर्णानि भविष्यन्ति तदानीं तानि सर्व्वशः।
येन तद्वासिनां स्थानं दुर्लभत्वं प्रयास्यति।
स्थास्यन्ति विप्रकृष्टे च त्वद्ग्रासकारिणो जनाः।
२० आगत्य कथयिष्यन्ति त्वदीयहारिताः सुताः।
अतिसङ्कुचितं स्थानं वस्तुं स्थानं प्रदेहि नः।
२१ तदा-वक्ष्यसि चित्ते त्वं केनेमे जनिता मम।
वन्ध्याहं सुतहीनासं देशच्युता विदेशिनी।
वत सन्ति सुता एते केनेमे प्रतिपालिताः।

पश्चैकस्य च त्वत्प्रसं मद्दा कुत्र स्थिता इमे ॥

२२ प्रभुणा परमेशेन वाक्यमेतन्निगद्यते।

पश्चान्यदेशलोकेभ्य इस्तिते चालिता मये।

अन्यलोकान् समुद्दिश्य केतौ च तोलिते मया।

वक्षःस्थले मनुष्यास्ते समानेष्यन्ति ते सुतान्।

तथा स्कन्धेन ते कन्याः समानेष्यन्ति ते जनाः।

२३ राज्ञां गणस्त्वदीयस्य भविता पालकः पिता

तेषां राज्ञीगणस्ते च धात्री माता भविष्यति।

त्वां प्रणंस्यन्ति ते लोका भूमिसंलग्नमस्तकाः।

भोत्स्यन्ते पदधूलीस्ते तेनाहं परमेश्वरः।

मयि विश्वासिनो ये ते लप्स्यन्ते नेति वेत्स्यसि ॥

२४ नेष्यते लोठितं द्रव्यं किं लोकाद् बलसंयुतात

जयिनो मानवाद् द्रव्यं हृतं किं मोचयिष्यते।

२५ एतदेव परेशेन वचनं सन्निगद्यते।

पराक्रमिधृतं द्रव्यं पुनर्नीतं भविष्यति।

भयङ्करजनै द्रव्यं लोठितं मोचयिष्यते।

यतोऽहं त्वद्विपक्षत्वात् संग्रामकारिभि र्जनैः।

सार्द्धं विधाय संग्रामं त्रास्यामि तव बालकान्।

२६ स्वमांसं भोजयिष्यामि तवोपद्राविणो जनान्।

स्वरक्तै र्मादयिष्यामि नवद्राक्षारसैरिव।

त्वत्त्राताहं परेशश्च याकुबः सर्व्वशक्तिमान् ।
तव मुक्तिप्रदातेति ज्ञास्यन्ति सर्व्वजन्मिनः ॥

## ५० पञ्चाशत्तमोऽध्यायः ।

१ अविश्वासकारणात् लोकेन यिहूदीयानां त्यजनं लोकस्य कथनं १० ईश्वरे विश्वसितुं विनयकथनञ्च ।

१ परमेश इदं वक्ति युष्माकं जननी मया ।
यत्पत्रेण परित्यक्ता कुत्र सा त्यागपत्रिका ।
वणिजां वा मदीयानां कस्मै वो विक्रयः कृतः ।
पश्चाधर्म्मेण स्वीयेन यूयं विक्रीततां गताः ।
युष्मन्माताभवत् त्यक्ता युष्मदाज्ञाविलङ्घनात् ।
२ मय्यागते निमित्तं किं कोपि नोपस्थितो जनः ।
मयाहूतस्य नो कोपि दत्तवान् उत्तरं जनः ।
वाहू मे दुर्ब्बलः किं न शक्नोति परिमोचितुं ।
उद्धर्त्तुं मम शक्तिः किं विद्यते नहि काचन ।
पश्याहं तर्जनेनैव शोषयामि सरित्पतिं ।
तथा स्रोतस्विनीश्चाहं प्रान्तरं विदधामि हि ।
म्रियन्ते तृषया मीना दुर्गन्धस्तेन जायते ।
३ कृष्णवर्णतया चाहम् एतदाकाशमण्डलम् ।
आच्छादयामि वासश्च शणजं परिधापये ॥
४ परिश्रान्तजनाम् वक्तुं योग्यानि वचनानि च ।

ददाति धीरवद्जिह्वां प्रभु र्मह्यं परेश्वर: ।
प्रबोधयन् प्रतिप्रात: स मां शिष्यजनं यथा ।
निधातुं मानसं कर्णौ मदीयौ मोचयत्यपि ।
५ प्रभुणा परमेशेन मोच्येते श्रवसी मम ।
अनाज्ञाग्राहको नाहं न भवामि पराङ्मुख: ।
६ प्रहारिणां ददे पृष्ठं कपोलं श्मश्रुहारिणां ।
लज्जानिष्ठीवनाभ्यां न छादयामि निजं मुखं ।
७ न लज्जेऽहं प्रभु र्यस्माद् उपकर्त्ता परेश्वर: ।
अग्निप्रस्तरवत् स्वीयं वदनं प्रकरोम्यहं ।
यतो यत्र चपिष्येऽहं तन्मया परिविद्यते ।
८ गणयेत् पुण्यवन्तं मां य: समीपे स वर्त्तते ।
अतएव मया सार्द्धं को वा विवदितुं क्षम: ।
वयं सम्भूय तिष्ठाम: को वैरी मम विद्यते ।
यो विद्यते स आयातु मदीयप्रतिकूलत: ।
९ पश्य प्रभु: परेशस्य उपकर्त्ता भवेन्मम ।
अतो मां दोषिणं कर्त्तुं परिशक्नोति को जन: ।
पश्य ते वस्त्रवत् सर्व्वे संगमिष्यन्ति जीर्णतां ।
जर्जरांश्च यास्यन्ति कीटैस्ते सकला जना: ॥
१० परमेशात् प्रभीतस्य तदीयसेवकस्य च ।
वचनेषु मनोयोगी कोऽस्ति युष्मासु तादृश: ।

अन्धकारेषु गच्छेद् यो दीप्तिं प्राप्नोति नैव च ।
करोतु स सुविश्वासं परमेश्वरनामनि ।
तथा स्वकीय ईश्वे च प्रत्याशां प्रकरोतु सः ।
११ पश्य वैश्वानरो यस्तु युष्माभिः परिज्वाल्यते ।
तथैव ज्वाल्यते यच्च युष्माभि र्दीपमण्डलं ।
तदग्निं याथ यूयञ्च तज्ज्वलद्दीपमण्डलं ।
मदीयकरतो यूयं फलमेतदवाप्स्यथ ।
युष्माभिः सकलै र्दुःखे शयनं प्रकरिष्यते ॥

५१ एकपञ्चाशत्तमोऽध्यायः ।

१ इब्राहीमो दृष्टान्तः ४ मनो निधातुं लोकानामाज्ञानं ७ परित्राणकथनं ९ आश्वास कथनं १२ सान्त्वनाकथनं १७ विलापकथनं २१ रक्षणकथनञ्च ।

१ धर्म्मानुगामिनो यूयं परेश्वरगवेषिणः ।
मामकीनमिदं वाक्यं युष्माभिः सुनिशम्यतां ।
यद्गिरेस्तक्षिता यूयं गह्वरात् खनिता यतः ।
युष्माभिः क्रियतां दृष्टिस्तदीयमवटं प्रति ।
२ युष्माकमादितातो य इब्राहीम् स निरीक्ष्यतां ।
सारां प्रति च वीक्षध्वं युष्मत्प्रसवकारिणीं ।
यत एकापि सा तस्या मयाह्वानं कृतं पुरा ।
तस्यै मया वरो दत्तः सा कृता बहुवंशिका ।
३ सान्त्वयिष्यति सियोनन्तु तथा तस्य परेश्वरः ।

सर्व्वमुच्छिन्नतां प्राप्तं स्थानं चारु करिष्यति।
वनमेदनवत् तस्य काननं परमेश्वरः।
उद्यानेन समं तेन निश्चितं संविधास्यते।
तत आनन्द उल्लासो धन्यवादो भविष्यति।
तथा ध्वनिश्च गीतानां ध्रुवमेव भविष्यति॥
४ मनो निधत्त मद्वाक्ये मदीयाः सर्व्वमानवाः।
यूयं शृणुत मल्लोका मदीयवचनानि च।
यतः प्रकाशः शास्त्रस्य मत्तएव भविष्यति।
दीप्तिकृते च लोकानां स्थापयिष्ये निजं विधिं।
५ मम धर्म्मः समीपस्थो मत् त्राणं समुपस्थितं।
मम हस्तौ च लोकानां विचारं साधयिष्यतः।
मां प्रति दूरदेशीया आशादृष्टिं विधाय ह।
प्रत्याशां प्रकरिष्यन्ति मदीये च भुजद्वये।
६ यूयन्तु परिवीक्षध्वम् ऊर्द्ध्वस्थाकाशमण्डलं।
यूयं दृष्टिं कुरुध्वञ्च नीचस्थां पृथिवीं प्रति।
यथा धूमस्तथाकाशोप्यन्तर्धानं गमिष्यति।
वसुन्धरा वस्त्रवच्च जीर्णत्वं समुपैष्यति।
इत्थं नाशं प्रयास्यन्ति लोका स्तत्र निवासिनः।
नित्यस्थं मत्परित्राणं मद्धर्म्मो नहि लोप्स्यते॥
७ धर्म्मज्ञा यो मनःस्थित शास्त्रस्य वचनं मम।

अतः शृणुत मद्वाक्यं माभैष्ट मर्त्यतर्जनात् ।
तथा तदीयनिन्दातो मा भूत शङ्कयाकुलाः ।
यतस्ते वस्त्रवत् कीटैः संभक्षिष्यन्ति जर्ज्जराः ।
मेषाणामिव लोमानि भोक्ष्यन्ते कृमिभिश्च ते ।
किन्तु मदीयधर्म्मो हि नित्यस्थायी भविष्यति ।
स्थास्यति मत्कृतं त्राणम् आपुरुषपरम्परं ॥
हे परमेश्वरबाहो त्वं जाग्रत् भव समुत्तिष्ठ ।
बलस्वरूपवस्त्रं यत् तत् परिधेहि पूर्व्ववत् ।
अर्थात् पूर्व्वमनुष्याणां कालवत् परिजागृहि ।
त्वमेव रहबः किं न प्रहारं कृतवान् पुरा ।
नागं त्वमेव किं नैव सक्षतं कृतवान् पुरा ।
० त्वयैव किं समुद्रोऽर्थात् शोषितो न जलाशयः ।
मुक्तानां पारयानाय सिन्धौ वर्त्म न किं कृतं ।
१ इत्थं व्याघुट्य यास्यन्ति परेशमोचिताः जनाः ।
गायन्त एव सियोनम् उत्तरिष्यन्ति ते नराः ।
नित्यानन्दकिरीटश्च तेषां संभावि मस्तके ।
हर्षस्तेषां मनुष्याणामाह्लादश्च भविष्यति ।
तेभ्यः शोकश्च कातर्य्यं करिष्यति पलायनं ॥
२ अस्मि सान्त्वयिताहं ते कुतस्त्वं नश्वरान्नरात् ।
तृणकल्पमनुष्याणां सन्तानेभ्यो बिभेषि च ।

१३ आकाशमण्डलं येन परितो विस्तृतं पुरा।
पृथिव्या भित्तिमूलञ्च स्थापयामास यो दृढं।
परेश्वरस्तव स्रष्टा कुतो विस्मर्य्यते त्वया।
नाशायोद्यतवत् यस्य समुपद्रोति मानुषः।
प्रत्यहं तस्य कोपात् त्वं भयं कस्मादुपैषि च।
तस्योपद्राविलोकस्य क्रोधो वा कुत्र विद्यते।
१४ शीघ्रं संमोच्यते वन्दी न कारायां मरिष्यति।
न च तदीयभक्ष्याणामभावः संभविष्यति।
१५ समुद्रस्य महोर्म्मीं य एकदैव निवर्त्तयेत्।
सैन्याध्यक्षस्य यन्नाम स ते प्रभुः परेश्वरः।
१६ आकाशमण्डलं यत्तद् विस्तारयितुमेव च।
भित्तिमूलं पृथिव्याश्च संस्थापयितुमेव च।
त्वं मे लोक इमां वाणीं सियोनं वक्तुमेव च।
अहं स्वकीयवाक्यानि निदधामि मुखे तव।
आच्छादयाम्यहं त्वाञ्च स्वकीयहस्तछायया॥
१७ हे पुरि त्वं यिरूशालम् प्रतिजाग्रहि जाग्रहि।
गात्रोत्थानं विधेहि त्वं परमेश्वरहस्ततः।
तदीयकोपपात्रेण पानञ्च विहितं त्वया।
कम्पनरूपपात्रस्य पीतमादाय तन्मलं।
१८ यति पुत्राः प्रसूतास्च त्वया तेषां हि मध्यतः।

एकोपि तनयो नैव तां नेतुमवतिष्ठति।
यावन्तस्य त्वया पुत्राः स्नेहेन प्रतिपालिताः।
तेषां मध्ये नचैकोपि करं धर्त्तुं हि तिष्ठति।
९ शून्यता च विनाशस्य द्वावेतौ घटितौ त्वयि।
त्वन्निमित्तं जनः को वा करोति परिदेवनं।
दुर्भिक्षं चन्द्रहासस्य त्वां प्रति घटिताविमौ।
२० कः सान्त्वयति लोकस्त्वां त्वदीयसर्व्वसूनवः।
परमेशस्य कोपेन त्वदीशतर्जनेन च।
मूर्च्छितत्वं परिप्राप्ता जालबद्धकुरङ्गवत्।
प्रतिमार्गीयवक्त्रेषु विसंज्ञा निपतन्ति च॥
२१ हे दुःखिते विना द्राक्षारसं या मत्ततां गता।
त्वं त्वमेव मदीयां तु भारतीं संनिशामय।
२२ पत्त्रादी स्वलोकानां प्रभुस्ते परमेश्वरः।
त्वदीयेनेश्वरेणेदं वचनं परिभाष्यते।
पश्य कम्पनरूपस्य पानपात्रस्य चार्थतः।
ते हस्तात् प्रतिग्टह्णामि कोपपात्रस्थितं मद्यं।
तत् त्वया न पुनर्व्वारं परिपातुं प्रलप्स्यते।
२३ त्वं प्रह्व वयं यामो येषां वाक्ये स्वमीदृशैः।
अपातयो निजं पृष्ठं म्टद्वत् पथिकमार्गवत्।
तवोपद्राविणां हस्ते करिष्ये तत्समर्पणं।

## ५२ द्विपञ्चाशत्तमोऽध्यायः ।

१ समाजस्याह्वानं ३ रक्षायाः कथनं ७ सुसंवादप्रचारण कथनं ९ तेन सुखं ११ परित्राणं १३ ख्रीष्टीयकथनञ्च ।

१ सियोन् जाग्रहि बुध्यस्व परिधेहि बलांशुकं ।
हे पूतपूर्य्यिरूशालम् धर त्वं चारु भूषणं ।
अमेध्यश्छिन्नचर्म्मा च त्वन्मध्यं न प्रवेक्ष्यति ।
२ यिरूशालम् वपर्धूलीर्म्मृष्ट्वासन उपाविश ।
सियोनो वन्दिकन्ये त्वं गलबन्धं विमोचय ॥
३ एतदेव परेशेन वचनं परिभाष्यते ।
यथा यूयं विना मूल्यं व्यक्रीणीत निजान् पुरा ।
विना धनं तथा यूयं मुक्तास्थ प्रभविष्यथ ।
४ यतः प्रभुपरेशेन वाक्यमेतन्निगद्यते ।
मल्लोका मिसरं गत्वा तत्स्थाने प्रावसन् पुरा ।
अश्शूरीयैस्ततः शेषे कृतोऽन्यायस्य तान् प्रति ।
५ इदानीं परमेशेन वाक्यमेतदुदीर्य्यते ।
मम लोका विना मूल्यं नीताः स्थानान्तरं हि यत् ।
तेनैव मामकीनस्तु को लाभः प्रतिविद्यते ।
अहङ्कारं प्रकुर्व्वन्ति तेषां शासकमानवाः ।
मदीयं नामधेयञ्च प्रत्यहं निन्दितं भवेत् ।
६ अतो ज्ञास्यन्ति मन्नाम मदीयाः सर्व्वमानवाः ।

सोऽहं समुपतिष्ठामि यः प्रतिज्ञातवानहं।
तस्मिन्नेव दिने लोकैस्तैरेतदवगंस्यते॥

७ य आनयेत् सुसंवादं सन्धिं संज्ञापयेच्च यः।
वदेत् मङ्गलवार्त्ताञ्च परित्राणं प्रचारयेत्।
कुर्य्यात् प्रभुत्वमीशस्ते सियोनमिति यो वदेत्।
तदीयपादयोः शैले शोभा भवति कीदृशी।

८ उच्चैःस्वरं प्रकुर्व्वन्ति त्वदीयरक्षिणो जनाः।
गीतञ्च परिगायन्ति मिलिता ते हि मानवाः।
सियोन् यदा परेशेन संप्रत्यागमयिष्यते।
तदा ते सम्मुखीभूय वीक्षिष्यन्ते परस्परं॥

९ हे यिरूशालमः शून्यस्थानानन्दयुतं भव।
मिलित्वा सर्व्वमेकत्र विधेहि च जयध्वनिं।
यतः परेश्वरः स्वीयान् मनुजान् सान्त्वयिष्यति।
यिरूशालमपुरं यत् तत् तेनैव मोचयिष्यते।

१० स्वकीयधर्म्मरूपौ द्वौ निजहस्तौ परेश्वरः।
दृष्टितः सर्व्वजातीनाम् अनावृतौ करिष्यति।
तेन भूम्यादिसंस्थाश्च तदन्तस्थाश्च ये जनाः।
अस्मदीश्वरकृतं त्राणं परिद्रक्ष्यन्ति ते नराः॥

११ इतो यूयं प्रतिष्ठध्वं वहिर्गच्छत गच्छत।
स्पृशत वस्तु मामेध्यं वहिर्यातास्य मध्यतः।

पूतीभवत यूयञ्च परेशपात्रवाहकाः।

१२ किन्तु यूयं द्रुतं नैव वहिः स्थानं गमिष्यथ।

न पलायनवद् यूयं गमनञ्च करिष्यथ।

परेमेशोहि युष्माकम् अग्रगामी भविष्यति।

पश्चाद् वर्त्तिष्यते वः स इस्रायेलीश्वरस्तु यः॥

१३ पश्य मत्सेवको यः स भविष्यति समुन्नतः।

स उच्चपदप्राप्तश्च सम्मान्यश्च भविष्यति।

१४ तस्य वक्त्रे ऽन्यवक्त्रेभ्यो विषमत्वं गते सति।

नृसन्तानाकृतिभ्यश्च विषमायां तदाकृतौ।

चमत्कारं गता लोका यथा तं वीक्ष्य भूरिशः।

१५ तथा स बहुजातीनां पापमोचं करिष्यति।

नीरवाश्च भविष्यन्ति राजान स्तस्य सम्मुखे।

यतस्तेषां समीपे च प्रकाशो यस्य नाभवत्।

तस्यापि दर्शनं तैस्तु मनुजैः परिलप्स्यते।

कदापि न श्रुतं तै र्यत् तदेव संविविच्यते॥

५३ त्रिपञ्चाशत्तमोऽध्यायः।

१ ख्रीष्टस्य नानादुःखानि तद्दुःखानां फलञ्च।

१ अस्मत् प्रचारिते वाक्ये विश्वासमकरोद्धि कः।

कस्मै प्रकाशितो जातो बाहुश्च परमेशितुः।

२ अङ्कुरस्य यथामूलं शुष्कभूमौ प्रजायते।

तथा वृद्धिं स प्राप्नोति नृणां तेषाञ्च दृष्टितः ।
तथा रूपं न शोभा च तं संमन्यामहे यथा ।
तथाकृति र्न तस्यासीत् प्रियं बुध्यामहे यथा ।
३ जातो ऽगण्यो नृणां मध्ये जातश्च सोपमानितः ।
शोकैः परिचितो लोको दुःखार्त्तश्चापि सोभवत् ।
मुखाच्छादिजनस्येवास्मत्तः स समजायत ।
अवज्ञातः स जातश्चामान्यो ऽस्माभिरजायत ।
४ सर्व्वा दुर्ब्बलतास्माकं तेनैव परिधारिता ।
अस्माकं सकलं व्याधिं सएव संगृहीतवान् ।
तथाप्याहत एवासौ प्रहृतो यत् स ईश्वरा ।
दुःखग्रस्तो ऽभवच्चेति बोधो ऽस्माकमजायत ।
५ आज्ञालङ्घनतो ऽस्माकं सो ऽभवत् क्षतसंयुतः ।
अस्मदधर्म्महेतोः स संचूर्णः समजायत ।
तस्योपर्य्यभवत् शास्तिरस्माकं मङ्गलप्रदा ।
अस्माकं जायते स्वास्थ्यं तदीयक्षतहेतुतः ।
६ मेषा इव वयं सर्व्वे यदा भ्रमणकारिणः ।
यदा चैकैकशो लोकः स्वस्वमार्गगतो ऽभवत् ।
तदा परेश्वरो ऽस्माकं सर्व्वेषामेव निश्चितं ।
तदधर्म्मफलं सर्व्वं तस्योपरि समर्पयत् ।
७ आदाने च कृते तेन तत्सर्व्वं समदीयत ।

तदा स वदनं स्वीयं संबध्य समतिष्ठत ।
समानीयत घाताय स यथा मेषशावकः ।
लोमच्छेदकसाक्षाच्च मेषश्च नीरवो यथा ।
आबध्य वदनं स्वीयं तथा स समतिष्ठत ।
८ अन्यायेन विचारेण स उच्छिन्नो ऽभवत् तदा ।
तत्कालीनमनुष्यान् को जनो वर्णयितुं क्षमः ।
यतो जीवतनृणां देशात् स उच्छिन्नो ऽभवत् ध्रुवं ।
मम लोकापराधस्य कारणादाहतो ऽभवत् ।
९ सार्द्धं कलुषिभिस्तस्य श्मशानेपि निरूपिते ।
सार्द्धं धनवता तेन श्मशानं प्राप्यते स्म हि ।
यतः किमपि दौरात्म्यं नहि तेन कृतं क्वचित् ।
छलस्य वचनं किञ्चित् नाभवत् तस्य वक्त्रके ।
१० तथापि तं समाहन्तुं दुःखं दातुञ्च तं प्रति ।
अभवत् परमेशस्य परिसन्तोषणं तदा ।
तस्य प्राणेषु जातेषु प्रायश्चित्तेषु पाप्मनः ।
स द्रक्ष्यति च वंशं स्वं सदा जीवीभविष्यति ।
तद्धस्ताभ्यां परेशस्याभिमतं कर्म सेत्स्यति ।
११ दर्शिं यास्यति दृष्ट्वा स स्वप्राणयातनाफलं ।
निजतत्त्वं परिज्ञाप्य धार्म्मिको मम सेवकः ।
अनेकान् मनुजानेव पुण्यवतः करिष्यति ।

यतस्तेषां स पापानां भारवाहं करिष्यति।
१२ निजप्राणव्ययस्तेन मृत्युं यावत् कृतः स्वयं।
तथा कलुषिभिः सार्द्धं गणितश्चाभवत् स हि।
प्रोह्य पापमनेकेषां संप्रार्थयत पापिषु।
अतोऽहं महतां मध्ये भागं दास्यामि तं प्रति।
पराक्रमिनृणां मध्यात् लोठं सोऽधिकरिष्यति॥

## ५४ चतुःपञ्चाशत्तमोऽध्यायः।

१ अन्यदेशीयजनैः समाजस्य वर्द्धनं ११ तस्य सौन्दर्य्यं सुखानि च।

१ वन्ध्ये सन्तानहीने त्वं जय जय स्वरं कुरु।
अप्रसूते त्वयोल्लासो जयशब्दस्य गीयतां।
यतः परेश्वरो वक्ति व्यूढायाः सन्ततेर्गणात्।
अनाथा या भवेन्नारी तदपत्यानि भूरिशः।
२ दूष्यस्थानं स्वकीयं त्वं विशालं प्रविधेहि च।
तथा तदीय उल्लोचः सम्यग् विस्तार्य्यतां त्वया।
न्यूनत्वं न विधेहि त्वं दूष्यरज्जुश्च दीर्घय।
तथा तदीया ये स्तम्भा स्तांश्च गाढं प्रपोषय।
३ यतस्त्वं दक्षिणे वामे प्राप्स्यस्यधिकवर्द्धनं।
तव वंशो ऽन्यदेशेषु चाधिकारमवाप्स्यति।
वसतिं ते करिष्यन्ति नगरे नरशून्यके।

४ मा भैषीस्त्वं यतो लज्जां कुतोपि नहि लप्स्यसे ।
मा कार्षीर्मुखवैवर्ण्यं नापमानमवाप्स्यसि ।
वरं यौवनकालस्यापमानं विस्मरिष्यसि ।
वैधव्यानादरे स्वीये स्मरणं नहि यास्यसि ।
५ यतः स्रष्टा त्वदीयो यः सैन्याध्यक्षाभिधश्च यः ।
सएव परमेशश्च त्वदीयो विद्यते पतिः ।
इस्रायेल् धर्म्मरूपो यो यः सर्व्वजगतः पतिः ।
इति नाम्ना प्रविख्यातः सोयं त्वन्मोक्षदायकः ।
६ यथा कापि परित्यक्ता नारी मानसदुःखिनी ।
ऊढा वा यौवने काले या त्यक्ता स्वामिना वधूः ।
तद्वत् तव परेशेन पुनराह्वा विधास्यते ।
७ अतीवाल्पेन कालेन त्वां परित्यक्तवानहं ।
इदानीं त्वां ग्रहीष्यामि महतानुग्रहेण तु ।
८ तव मुक्तिप्रदाता यः स परेश इदं वदेत् ।
क्रोधाद्देकनिमेषेण त्वत्तो गोपायितं मुखं ।
कृपां त्वयि करिष्यामि किन्तु प्रीत्या ह्यनन्तया ।
९ नोहाप्लावः समीपे मे दृष्टान्तो ऽस्याभिजायते ।
नहि नोहो जलाप्लावः प्रभविष्यति वै पुनः ।
एतस्याहं यथा पूर्व्वं शपथं सम्यगाचरं ।
तथा त्वां प्रति नैवाहं भविष्यामि रुषान्वितः ।

भर्त्सयिष्ये पुन र्न त्वां मयात्र श्वपनं कृतं ।
दयते त्वां परेशो यः स एतद्वचनं वदेत् ।
शैला दूरीक्रियन्ते चेद्‍ पात्यन्ते चोपपर्व्वताः ।
तथाप्यनुग्रहो मे नो त्वत्तो दूरीभविष्यति ।
मत्कृतो नियमश्चेमो नह्येव पातयिष्यते ॥
दुःखिनि झञ्झया हेते सान्त्वनापरिवर्ज्जिते ।
पश्चाहं स्थापयिष्यामि सिन्दूरै स्तव प्रस्तरान् ।
भित्तिमूलं करिष्यामि नीलेन मणिना तव ।
आलिस्ते गृहपृष्ठस्य पद्मरागैः करिष्यते ।
मणिभ्यः सूर्य्यकान्तेभ्य स्तव द्वारं करिष्यते ।
अश्मभ्यो बहुमूल्येभ्यो भित्ति र्निर्म्मास्यते तव ।
त्वदीयान् सकलान् बालान् परेशः शिक्षयिष्यति ।
बालकानां त्वदीयानां महाशान्ति र्भविष्यति ।
४ त्वं धर्म्मेण स्थिरीभूय दूरे ऽन्यायात् निवर्त्स्यसि ।
नहि भेष्यसि तत्रापि शङ्का दूरे निवर्त्स्यति ।
त्वदीयसन्निधिं नैव कदापि सागमिष्यति ।
५ त्वामुद्दिश्य विपक्षत्वं यदि कश्चित् समाचारेत् ।
तर्हि तत्ते विपक्षत्वं नहि मत्तो भविष्यति ।
यः करोति विपक्षत्वं स ते पक्षो भविष्यति ।
१६ पश्य यः कर्म्मकारो हि भस्त्रयाङ्गारराशिना

प्रज्वाल्याग्निं स्वकर्म्मानुसारेणास्त्रं करोति तं।
अहं सृजामि नाशार्थं मनुजञ्च विनाशकं।
१७ किन्तु यत् त्वद्विरुद्धं हि भवत्यस्त्रं सुनिर्म्मितं।
भविता सार्थकं नो तत् या जिह्वा च विवादिनी।
तान्तु न्याय्ये विचारे त्वं करिष्यसि सुदोषिणीं।
एष आस्तेऽधिकारो वै सेवकानां परेशितुः।
तेषां पुण्यं भवेत् तस्मात् परमेशो वदेदिति॥

## ५५ पञ्चपञ्चाशत्तमोऽध्यायः।

१ प्रत्येतुं पापिनामाह्वानं ६ ईश्वरमन्वेष्टुम् आह्वानं ९ तत्र धर्म्मेण यत् सुखं तस्य वर्णनञ्च।

१ तृषिता मनुजा यूयं समेत तोयसन्निधिं।
वित्ताभावे समागत्य भक्ष्यं क्रीत्वा च भक्षत।
अर्थमूल्यं विना दुग्धं क्रीणीत गोस्तनीरसं।
२ व्ययिध्वे च कुतो वित्तमभक्ष्यद्रव्यकारणात्।
अतृप्तिकरवस्त्वर्थं कुरुध्वे च श्रमं कुतः।
मनो निधाय युष्माभि र्मदीयं श्रूयतां वचः।
अभिभक्ष्योत्तमैरेव प्राणान् सन्तर्पयिष्यथ।
अत्युत्तमेन खाद्येन प्राणतृप्तिः करिष्यते।
३ मत्सन्निधिं समायात यूयं संयोज्य मानसं।
शृणुत तेन युष्माकं प्राणरक्षा भविष्यति।

आसीदनुग्रहो यो मे दायूदं प्रति निश्चितं ।
अहं तदनुसारेण युष्माभिः सकलैः सह ।
एकं हि नियमं नित्यं करिष्यामि सुनिश्चितं ।
४ पश्य तं साक्षिणं मया जातीनामग्रगं तथा ।
व्यवस्थापकमेकञ्च प्रनियोक्ष्याम्यहं ध्रुवं ।
५ यान् जातीयान् न वेत्सि त्वम् आह्वास्यन्ते च ते त्वया
ये जातीया विदुर्न त्वां ते परेशप्रभोः कृते ।
इस्रायेल्धर्म्मरूपार्थं धाविष्यन्ति च त्वां प्रति ।
यतस्तेन त्वदीयं यत् गौरवं तत् करिष्यते ॥
६ यदा परेश्वरः प्राप्यस्तदा स संगवेष्यतां ।
युष्माभिः प्रार्थ्यतां तावत् यावत् तिष्ठति सन्निधिं ।
७ पापी स्वकीयमाचारं स्वसङ्कल्पमधार्म्मिकः ।
परित्यज्य परेशस्य प्रति संपरिवर्त्ततां ।
तेनैव तेन तस्मिंस्तु करुणा प्रकरिष्यते ।
अस्माकमीश्वरं तस्य प्रति संपरिवर्त्ततां ।
यतोऽत्यैनारतीवासौ क्षमावान् परिकीर्त्यते ॥
८ परेशो वक्ति सङ्कल्पो मदीयो योऽस्ति मानसः ।
स सङ्कल्पस्य युष्माकं तुल्यतां नहि गच्छति ।
तथा मार्गश्च युष्माकं मन्मार्गसदृशो नहि ।
९ आकाशमण्डलं यावदुच्चं भवति भूमितः ।

युष्माकं मार्गतस्तावत् उच्चो मार्गो भवेन्मम ।
युष्मत्सङ्कल्पतस्तावत् सङ्कल्पः प्रोन्नतो मम ।
१० वृष्टिर्हिमञ्च खादेत्य नहि तच्च पुनर्व्रजेत् ।
कृत्वार्द्रां पृथिवीं कुर्य्यात् साङ्कुरां सफलामपि ।
वप्ते ददाति वीजञ्च भक्ष्याणि भक्षकाय च ।
११ मन्मुखान्निर्गतं वाक्यमवश्यं तादृशं भवेत् ।
परावर्त्तिष्यते नो मां प्रति तन्निष्फलीभवेत् ।
निरूपयामि यत् तत्तु सिद्धमेव करिष्यति ।
प्रेरयामि यदर्थञ्च सफलं तत् करिष्यति ।
१२ यूयं तेनैव सानन्दं क्षेमेण च वहिर्गताः ।
भविष्यथायतो नीताः पर्व्वताश्चोपपर्व्वताः ।
गीतं गास्यन्ति युष्माकं सर्व्वेषाञ्च समक्षतः ।
तालिकाञ्च प्रदास्यन्ति क्षेत्रस्थाः सकला द्रुमाः ।
१३ कण्टकिवैनिमय्येन देवदारु र्भविष्यति ।
कोलीनां वैनिमय्येन मेन्धीवृक्षो भविष्यति ।
परमेशनिमित्तं तत् नामधेयमलोप्यकं ।
संभविष्यति चैकं वै नित्यसंस्थायिलक्षणं ॥

---

## ५६ षट्पञ्चाशत्तमोऽध्यायः ।

१ धर्म्मकर्म्मकरणं विषयः तस्य फलं ९ अन्धरक्षकाणां भर्त्सनञ्च ।

१ एतदेव परेशेन वचनं प्रतिभाष्यते ।
विचारः क्रियतां न्याय्यो युष्माभि र्धर्म्मकर्म्म च ।
यतो मत्तः परित्राणमागन्तुं निकटेऽस्ति हि ।
तथा मदीयधर्म्मस्य प्रकाशितुं समुद्यतः ।
२ करोति य इदं कर्म्म तच्चासज्य नरात्मजः ।
यस्तु विश्रामकं वारं पालयन् नापवित्रयेत् ।
स च धन्यः स्वहस्तौ यः कुकर्म्मभ्यो निवर्त्तयेत् ।
३ परेशो मां स्वलोकेभ्यः सर्व्वथा कृतवान् पृथक् ।
इति वाक्यं न ते ब्रूयुः परेशासक्तमानवाः ।
विदेशीयमनुष्याणां सन्ताना ये च तेपि च ।
अहमेव तरुः शुष्को वदेन्नेति नपुंसकः ।
४ यतो ये मम विश्रामं पालयन्ति नपुंसकाः ।
यच्चास्ति मम सन्तोषो मनोनीतं करोति तं ।
५ नियमं पालयेन्मे च तान् परेश इदं वदेत् ।
प्राचीरमध्यतः स्वीये गृहे तेभ्यो महोत्तमं ।
स्थानं नाम च दास्यामि पुत्र्याः पुत्रस्य नामतः ।
अक्षोप्यं नित्यसंस्थायि नामैकं दास्यते मया ।
६ ये विदेशीयसन्तानाः सेवार्थं परमेशितुः ।

तस्मात्ति प्रेम कर्त्तुञ्च तद्दासा भवितुं तथा ।
प्रभवन्ति समासक्ता निश्चितं परमेश्वरे ।
अर्थाद् विश्रामवारं यः पालयन् नापवित्रयेत् ।
मदीयो नियमो योस्ति तस्य पालनमाचरेत् ।
७ स्वकीयपर्व्वतं मेध्यं तान् जनानानयाम्यहं ।
आनन्दितान् करिष्यामि स्वकीयप्रार्थनागृहे ।
ग्राहिष्यते च वेद्यां मे तेषां होमबलिर्बलिः ।
गृहं मे सर्व्वलोकेषु ख्यास्यति प्रार्थनागृहं ।
८ इस्रायेल् दूरितान् लोकान् सुसंगृह्णाति यः प्रभुः ।
तेनैव परमेशेन वाक्यमेतदुदीर्य्यते ।
इदानीं सन्ति ये लोकाः संगृहीताः पुरा मया ।
तैः सहान्येपि लोकाश्च ग्रहीष्यन्ते मया ध्रुवं ॥
९ हे क्षेत्रसंस्थिताः सर्व्वे पशवो यूयमेत च ।
हे वन्यपशवो यूयं ग्रासं कर्त्तुं समेत हि ।
१० तदीयरक्षिणः सर्व्वे अन्धा ज्ञानविवर्ज्जिताः ।
शब्दं कर्त्तुं समर्था नो यः श्वा मूकस्तु तत्समाः ।
स्वप्ने पश्यन्ति निद्रान्ति तन्द्रासिच्छन्ति सर्व्वदा ।
११ स्वकुक्षिम्भरयः श्वानो नैमे तृप्ताः कदाचन ।
इमे च पालकाः किञ्चित् तत्त्वज्ञानं विदन्ति न ।

चेष्टित्वा स्वस्वलाभं ते वचएतद् ब्रुवन्ति च ।
संग्रहीमो वयं सर्व्वे गोमन्नीरखमेत हि ।
अनेकमद्यपानञ्च वयं कुर्म्मो ऽद्यभक्ष्यवत् ।
तस्मादप्यधिकं भोज्यं श्वोदिने संभविष्यति ॥

५७ सप्तपञ्चाशत्तमोऽध्यायः ।

१ धार्म्मिकानां लोकानां मरणं २ यिहूदीयानां दुष्टता १४ मद्यलोकानां रक्षणञ्च ।

विनश्यद्धार्म्मिको लोको न केनापि विविच्यते ।
नीयते परलोकं स यो भवेत् पुण्यवान्नरः ।
तथा कश्चिन्मनुष्योऽपि निदधाति मनो नहि ।
किन्तु धार्म्मिकलोको यो विपद्भ्यः सहि नीयते ।
१ सन्मार्गगामिलोको यः प्रविशेत् स सुखस्थलं ।
स्वकीयशयनीये ते विश्राम्यन्ति च मानवाः ॥
३ हे मायाविसुता यूयं हे पारदारिकात्मजाः ।
हे वेश्यातनया यूयं समागच्छत सन्निधिं ।
४ उपहसथ कं यूयं कस्मै वक्त्रञ्च भङ्गिता ।
५ वहिः कुरुथ जिह्वाञ्च तेजस्विशाखिनस्तले ।
ज्वलिताद्देवतासक्ता निम्नस्थाने गिरेरधः ।
हथ बालान् न किं यूयमाज्ञायाहिंस्त्रलात्मजाः ।
६ निम्ने च स्निग्धपाषाणे युष्मदंशा भवन्ति च ।

तत्राधिकारो युष्माकं तेभ्यः पेयं प्रदत्थ च।
उदसृजत नैवेद्यं तेन तुष्टिं व्रजामि किं।
७ अत्युच्चपर्व्वते यूयं शयनीयं न्यधत्त च।
तत्र स्थाने बलिं दातुं यूयं हि समगच्छत।
८ शिलाकवाटयोः पश्चात् स्वेष्टदेवं न्यधत्त च।
मेऽगोचरेऽशुकं मुक्का खट्वाश्च समगच्छथ।
एधयित्वा स्वशय्यां तैः कुर्य्यात नियमं सह।
९ तैलमादाय राजस्य समीपं पर्य्यगच्छत।
तथा सुगन्धिवस्तूनां प्राचूर्य्यं संव्यधत्त च।
युष्माभि र्बहवो दूताः प्रहिता दूरनीवृतं।
यावच्च परलोकं स्थान् न तान् ज्ञात्वा च संस्थिताः।
१० मार्गाणां दूरताहेतोः पथश्रान्तिमवाप्नुत।
तथाप्यहं निराशोस्मि नेति वाक्यमवोचत।
बलं प्राप्नुत हस्तेषु नाभूत दुःखिनस्ततः।
११ एतत्शङ्कान्विताः कस्य हेतोश्च त्राससंयुताः।
कुरुत च मृषाचारं स्मरत मां न मानसैः।
मनोभि र्नच युष्माभिः क्रियते हि विवेचना।
अहं बहुदिनं यावन् मौरवः किं भवामि न।
एतस्मात् कारणादेव त्वं मत्तो न बिभेषि च।
—— [illegible] युष्माकं धर्म्ममेव हि।

त्वदीयकर्म्मभि र्नैवोपकारस्ते भविष्यति ।
यदार्त्तरावं कुर्य्यात देवैरुद्धार्य्यतां तदा ।
प्रभञ्जनस्तु तान् वोढा निश्वासैकेन नेष्यति ।
प्रत्याशां मयि यः कुर्य्यात् देशं सोधिकरिष्यति ।
मम मेध्यं गिरिञ्चैव स जनोधिकरिष्यति ॥
आसादयासादयेति तदा वाक्यं वदिष्यति ।
समानं कुरु पन्थानं मार्गबाधाश्च दूरय ।
यतो महानूर्द्ध्वसंस्थोऽनन्तकालनिवासकः ।
धर्म्मरूपाख्यया यश्च प्रख्यातिमुपगच्छति ।
तेनैव परमेशेन वाक्यमेतदुदीर्य्यते ।
उच्चे स्थाने पवित्रे च वासं योहं करोमि सः ।
आत्मानं नम्रलोकानां कर्त्तुञ्चैव सचेतनं ।
सजीवं मानसं कर्त्तुं लोकानां चूर्णचेतसां ।
नम्राणां चूर्णचित्तानां निकटे निवसाम्यहं ।
१६ विवदिष्यामि नो नित्यं नाहं क्रोत्स्यामि सर्व्वदा ।
इत्यमात्मा च प्राणाश्च मम हस्तेन निर्म्मिताः ।
मदीयसम्मुखे तौ द्वौ क्लान्तत्वमुपयास्यतः ।
१७ स्वमनोनीतमार्गे सोऽवाध्यत्वं प्रगतो यदा ।
तदा तल्लोभपापेन क्रुद्धा स मारितो मया ।
गोपयित्वा निजं वक्त्रं क्रोधेन स्थितवानहं ।

मार्गमहं दृष्ट्वा कर्त्तास्मि तस्य सुस्थतां ।
िव भविष्यामि तदीयपथदर्शकः ।
स्य शोकयुक्तांश्च सान्त्वयिष्यामि मानुषान् ।
ार इदं ब्रूयादहमोष्ठद्वयोः फलम् ।
न्निकटदूराणां नृणां चेमं सृजाम्यहम् ।
ोभयो सुस्थो करिष्यामि सुनिश्चितं ।
न्त मनुजा दुष्टा आलोडितसमुद्रवत् ।
निधिः कदाचिद्यः स्थिरतामुपगच्छति ।
ाष्ठति मलं पङ्कं यदीयपयसोऽपि च ।
दुष्टजना एत आलोडितसमुद्रवत् ।
ानां मङ्गलं नास्ति मदीय ईश्वरो वदेत् ॥

५८ अष्टपञ्चाशत्तमोऽध्यायः ।

पञ्चदिलोकानां कापट्यस्य भर्त्सनं उपवासस्य निर्णयः ८ धर्म्मकर्म्मणः फलं १३ विश्रामवारपालनस्य फलं ।

उच्चैः स्वरः प्रकर्त्तव्यः चान्तिः कार्य्या न कुत्रचित् ।
ावत् एवमुत्थाप्य मदीयानेव मानुषान् ।
ं पापञ्च याकूबो ऽन्वयमागांसि बोधय ।
यन्ते ऽन्वहं ते मां ज्ञातुं महत्ये तुष्टिनः ।
जातिः कुरुते धर्म्मं विधिमेषां जहाति न ।
ा भवन्ति मज्ञाञ्च पृच्छन्ति धर्म्मसद्विधिं ।

ईश्वरं समुपागन्तुं सन्तुष्टाः कथयन्ति च ।
उपवासे कृतेऽस्माभिः कुतो दृष्टिं करोषि न ।
दुःखे दत्ते स्वप्राणेभ्यः कुतस्तन्न विविच्यते ।
पश्योपवासघस्रे हि युष्माभि र्भुज्यतां सुखं ।
परपरिश्रमे किञ्चित् कुरुथ नहि लाघवं ।
विवादकलहौ कर्त्तुं युष्माभिः समुपोष्यते ।
प्रहर्त्तुं पापमुष्टा च युष्माभिः समुपोष्यते ।
भद्रमद्य यथा यूयं उपवासं विधाय च ।
ऊर्द्धस्थाने तथा स्वीयं शब्दं न श्रावयिष्यथ ।
५ उपवासो भवेदेष मनोनीतस्तु किं मम ।
एकस्मिन् दिवसे स्वेभ्यः प्राणेभ्यो दुःखदत्तता ।
यथा च पाटिवृत्तः स्यात् शिरसां नमनं तथा ।
शय्यार्थं शाणभस्मानां पातनं किमुपोषणं ।
इदं दिनं परेशेन ग्राह्यं ख्यातं भवेत्तु किं ।
६ मोचनं पापबन्धस्य युगकीलस्य मोचनं ।
उपद्रुतजनोद्धारो भङ्गः सर्व्वयुगस्य च ।
७ तथा क्षुधितलोकेभ्यः खाद्यानां परिवण्टनं ।
दूरीकृतदरिद्राणां स्वगृहानयनं तथा ।
नग्नञ्च मानुषं वीक्ष्य तस्मै वस्त्रस्य दत्तता ।
स्वमांसतुल्यलोकेभ्यो गुप्तत्वेन न संस्थितिः ।

इत्थं समुपवासः किं मनोनीतो भवेन्न मे ॥
८ तदारुणसमा दीप्तिं वः प्रकाशं गमिष्यति ।
भविष्यति तदा शीघ्रं यौष्माकीनं सुमङ्गलं ।
तदा धर्म्मस्तु युष्माकम् अग्रगामी भविष्यति ।
परमेशीयतेजो वः पश्चाद्भागि भविष्यति ।
९ तदा युष्माभिराहूतः परेशः प्रतिवक्ष्यति ।
स वक्ष्यति समाहूत उपतिष्ठाम्यहन्त्विति ।
१० यदि यूयं स्वमध्यात्तु युगञ्चाङ्गुलितर्जनं ।
दूरयेत वचः पापं क्षुधिते ऽन्नं प्रयच्छथ ।
दुःखिनः प्राणिनो यूयमाप्यायितान् विधत्त च ।
अन्धकारे तदा दीप्तिं युष्माकमुज्ज्वलिष्यति ।
मध्याह्नइव युष्माकमन्धकारो भविष्यति ।
११ नेष्यध्वे परमेशेन यूयं सर्व्वेपि निश्चितं ।
तर्पयिष्यति युष्माकं प्राणान् स निर्जलेपि हि ।
कीकसानि च युष्माकं समेदानि करिष्यति ।
सुषिक्तमिव सूद्यानं यूयं सर्व्वे भविष्यथ।
जलाभावो न यस्यास्ते भविष्यथ तदुत्सवत् ।
१२ युष्माकं वंशजाता ये मनुष्याः पूर्व्वकालतः ।
स्थानएव समुच्छिन्ने निर्म्मास्यन्ति गृहान् हि ते ।
पूर्व्वीयभित्तिमूले च करिष्यथ निचायनं ।

भग्नप्राचीरनिर्म्मातुर्नाम्ना ख्यातिं गमिष्यथ ।
निवासिमार्गनिर्म्मातुर्नाम्ना ख्यातिं गमिष्यथ ॥
यदि यूयं निवर्त्तध्वे विश्रामस्याह्नि कर्म्मणः ।
मत्पवित्रदिने स्वीयं सुखं यदि न वाञ्छथ ।
यदि विश्रामवारञ्च प्राभाष्य तोषकं दिनं ।
परेशितुर्दिनं मेध्यम् आदर्त्तव्यं समुच्य च ।
गमनं निजमार्गेण सुखाभिलाषचेष्टनं ।
अकारणकथावादो ऽकृत्वा कर्म्माण्यमूनि च ।
मन्यध्वे यदि तं तर्हि तोक्ष्यथ परमेश्वरे ।
उच्चस्थानं पृथिव्याः स युष्मानारोहयिष्यति ।
युष्मत्तातस्य याकूबोधिकारं भोजयिष्यति ।
यतः परेश्वरेणैतत् स्ववक्त्रेन प्रभाषितं ॥

५९ ऊनषष्टितमोऽध्यायः ।

१ पापस्य कथनं तस्य फलं २१ केवलेनेश्वरेण पापात् रक्षणञ्च ।

१ पश्य भुजो परेशस्य नहि खर्व्वस्तु तादृशः ।
यस्य मोचयितुं नैव शक्तिमान् हि प्रजायते ।
न तस्य बधिरौ कर्णौ यत् स श्रोतुं क्षमो नहि ।
२ किन्त्वधर्म्मस्तु युष्माकं पृथगीशात् करोति वः ।
अपराधश्च युष्माकमाच्छादयति तन्मुखं ।
एतत्कारणतस्तेन श्रूयते नहि किञ्चन ।

३ हस्ता रक्तैरधर्म्मैश्चाङ्गुल्यो ऽमेध्यास्तु सन्ति वः ।
ओष्ठौ वो वदतो मिथ्या जिह्वा पापं प्रचारयेत् ।
४ विवदन्ते न सत्याय न्यायपक्षाश्च केपि न ।
मृषा वदन्त्यसारे च प्रत्याशां कुर्व्वते हि ते ।
हिंसागर्भं धरन्तस्ते ऽधर्म्मं संजनयन्ति च ।
५ सर्पस्य स्फोटयन्त्यण्डं लूताजालञ्च कुर्व्वते ।
तेषामण्डानि यो भुंक्ते प्राणत्यागं करोति सः ।
तस्मिन् संस्फुटिते तेषां कालसर्पो वहिर्भवेत् ।
६ वस्त्ररूपाणि जालानि नहि तेषां भवन्ति हि ।
ते जनाः स्वकृतै र्द्रव्यै र्भवन्त्याच्छादिता नहि ।
तेषां कर्म्माण्यधर्म्माश्च दौरात्म्यानि करेषु च ।
७ धावन्ति चरणास्तेषां कुकर्म्मकरणाय च ।
निर्दोषरक्तपातार्थं क्षिप्रं गच्छन्ति ते जनाः ।
चिन्ता पापवती तेषां स्तो विनाशापदुभौ पथि ।
८ न विदुः क्षेममार्गं ते विचारो गमने नहि ।
अकुर्व्वन् निजमार्गांश्च वक्रांस्ते सर्व्वमानवाः ।
ये जनास्तेन गच्छन्ति न ते जानन्ति मङ्गलं ।
९ अतो ऽस्मद्विप्रकृष्टे तु विचारः परितिष्ठति ।
धर्म्मेण सङ्गमस्माकं नहि धर्त्तुं प्रशक्यते ।
दीप्तिरपेक्ष्यते ऽस्माभि स्तमिस्रमपतिष्ठति ।

लोकोऽपेक्ष्यते ऽस्माभि र्भ्रम्यते तिमिरे सदा।
गयामो वयं हस्तैरन्धवत् भित्तिलब्धये।
मामस्व वयं सर्व्वे दृष्टिहीनमनुष्यवत्।
न्ध्यायामिव मध्याह्ने स्खलन्ति चरणास्व नः।
न्धकारेषु तिष्ठामो वयं मृतमनुष्यवत्।
।लुकवच्च गर्जामो रवं कुर्म्मः कपोतवत्।
याय: प्रतीक्ष्यते ऽस्माभिः किन्तु किञ्चिन्न विद्यते।
त्राणं प्रतीक्ष्यते किन्तु तन्नो दूरे सुतिष्ठति।
यतः पापं समक्षं ते जातं बहुतरं हि नः।
ददाति साक्ष्यमस्माकम् अपराधो विरुद्धतः।
अस्माकं यानि पापानि तान्यस्मासु लगन्ति च।
अधर्म्मान् वयमस्माकं जानीमः स्वयमेव च।
पापं कृत्वा परेशेन समं मिथ्या प्रकुर्म्महे।
वयं पराङ्मुखाः स्वेशात् कथामुपद्रवस्य च।
आज्ञासंलङ्घनस्यापि कथयामः कथां तथा।
मनोभि र्गर्भमाधाय मृषावाक्यं प्रसूमहे।
४ विचारो भ्रमते पश्चात् दूरे ऽन्यायश्च तिष्ठति।
सारल्यं प्रविशेन्नैव मार्गे स्खलति सत्यता।
५ सत्यता हारिता जातास्माभिरेव सुनिश्चितं।
कुकर्म्मत्यागिनो ये ते भवन्ति लोठवस्तुवत्॥

६ पश्यन् परेश्वरो ऽन्यायं नाप्यतुष्टिं भजिष्यति ।
न वर्त्तते पुमान् कोपि तेन वीक्षिष्यते हि तत् ।
मध्यस्थो न भवेत् कोपि तस्मात् चमत् करिष्यते ।
तदा तदीयहस्ताभ्यां त्राणसिद्धिः करिष्यते ।
तदा तदीयधर्म्मश्च तदालम्बी भविष्यति ।
७ धर्म्मरूपः पटस्तेन प्रबद्धः प्रकरिष्यते ।
त्राणरूपशिरस्त्राणं धारयिष्यति मस्तके ।
प्रतिफलस्वरूपञ्च वस्त्रं स परिधास्यति ।
प्रतापमुत्तरीयञ्च वस्त्रं गात्रे निधास्यति ।
८ कर्म्मानुसारतस्तेन प्रतिफलं प्रदास्यते ।
क्रोधं दाता स्वशत्रुभ्यः प्रतिफलं स वैरिणे ।
विदूरदेशवासिभ्यः प्रतिफलं प्रदास्यति ।
१९ वासिनः पश्चिमे देशे परमेश्वरनामतः ।
सूर्य्योदयस्थिता लोका भेष्यन्ति तत्प्रतापतः ।
यदा शत्रु र्नदीवच्च वेगत आगमिष्यति ।
तदा परेश्वरस्यात्मा तं निवृत्तं करिष्यति ।
२० परमेश इदं वक्ति सियोनः सन्निधौ तदा ।
अर्थतो याकुबो वंशे कलुषाद् ये परावृत्ताः ।
समीपं तन्मनुष्याणां मुक्तिदाता समेष्यति ।
[illegible]

य्याविष्टो य आत्मा मे दत्तं यत् त्वन्मुखे वचः।
दीयवदनात् तच्च तवापत्यमुखात् तथा।
दीयापत्यजातानां मुखादद्यदिनावधि।
र्व्वकालं न गन्ता हि परमेश इदं वदेत्॥

६० षष्टितमोऽध्यायः।

. अन्यदेशीयैर्मण्डल्या वृद्धिः ८ स्वल्पकालदुःख भोगानन्तरं तस्य सुखं।

तव दीप्तिः समायाति उत्तिष्ठ दीप्तिमान् भव।
तेजः परेश्वरीयं त्वां प्रत्युदयं प्रगच्छति।
त्वं पश्य तिमिरं पृथ्वीं घोरं तमोऽन्यदेशिनः।
आच्छादयति किन्त्वीश उदयं त्वयि यास्यति।
तवोपरि तदीयञ्च तेजो दृष्टं भविष्यति।
३ तव दीप्त्यान्यदेशीयैर्गमनं प्रकरिष्यते।
गमिष्यते च भूपालैः स्वदीयै नूतनांशुभिः।
४ निरीक्ष्य त्वं चतुर्दिक्षु संपश्य सकला अपि।
संभूय तव सान्निध्यं करिष्यन्ति समागमं।
त्वदीयपुत्त्रवर्गस्य समायास्यति दूरतः।
त्वदीया या दुहितरस्ताः संनेष्यन्ते च कचतः।
५ तदा त्वं ततसमालोक्य सुप्रसन्नो भविष्यसि।
तव हृत् कंम्पतामेत्य विस्तीर्णत्वं गमिष्यति।

यतः सरित्पतेर्वित्तं रंस्यति तवोपरि ।
अन्यदेशीयवित्तानि समेष्यन्ति तवोपरि ।
६ मिदियनैफयोरुष्ट्रैर्युवोष्ट्रैश्चावरीष्यसे ।
शिवानिवासिनः स्वर्णम् आनेष्यन्ति च कुन्दुरुं ।
प्रशंसां परमेशीयां करिष्यन्ति प्रकाशितां ।
७ मेलिष्यन्ति तवाभ्यासे केदरपशुपालकाः ।
मेषसंघो निवायोतः सेवनं ते करिष्यति ।
उत्सृष्टो यज्ञवेद्यां मे सुग्राह्यश्च भविष्यति ।
मन्दिरं शोभयिष्यामि निजभूषणरूपकं ॥
८ नीडान् प्रति समुड्डीनाः कपोता इव मेघवत् ।
य इमे समुपायान्ति भवन्ति तदमे हि के ।
९ प्रतीक्षिष्यन्ति मां लोका अवश्यं दूरदेशिनः ।
तव प्रभोः परेशस्य नामधेयनिमित्तकं ।
इस्रायेलधर्मरूपस्य त्वत्शोभाकारिणः कृते ।
सुवर्णं रूप्यमानेतुं पुत्त्रांस्ते दूरदेशतः ।
तार्शीशीयस्य यः पोतः सोऽग्रगामी भविष्यति ।
१० त्वत्प्राचीरं निचेष्यन्ति तनयास्तु विदेशिनां ।
त्वत्सेवनं करिष्यन्ति भूपास्तेषां नृणामपि ।
कुपिता आहतं त्वाहं दयिष्येऽनुग्रहेण च ।
११ त्वद्‌भ्यासमपक्षीणो सैन्यानामन्यदेशिनां ।

तव द्वारं सदा मुक्तं नयनाय महीभृतां ।
दिवा रात्रौ च तद् द्वारं नहि रुद्धं भविष्यति ।
त्वद्सेवाकृतौ देशौ राज्यस्य प्रविनंक्ष्यतः ।
उच्छिन्नाश्च भविष्यन्ति नीष्टतः सकला हि ते ।
लिवानोनस्य यत्तेजस्तद् विराजिष्यते त्वयि ।
देवदारु च तिद्दारस्तासूरश्च महीरुहः ।
मन्मध्यस्थानभूषार्थं संमिल्य चागमिष्यति ।
मया स्वपादपीठस्य स्थानं प्रशोभयिष्यते ।
४ त्वदुपद्राविणां पुत्रा एष्यन्ति त्वां प्रणम्य तु ।
नंस्यन्ति त्वां पतित्वा ते पादयोस्तुच्छकारकाः ।
परेशितुः पुरीसायेल् धर्म्मरूपसियोनमपि ।
इत्युक्ता ते करिष्यन्ति तव सम्बोधनं जनाः ।
५ त्यक्तस्त्वं घृणितश्चासी नहि कोपि त्वयागमत् ।
किन्त्वहं त्वां करिष्यामि गौरवानन्तसंयुतं ।
तथानन्दस्वरूपञ्च पुरुषानुक्रमावधि ।
६ अन्यदेशीयलोकानां दुग्धपानं करिष्यसि ।
वक्षस्थे च भूपानां प्रतिपाल्या भविष्यसि ।
परेश्वरोहमेवेति त्वत्त्राता मुक्तिदायकः ।
याकूबीयं पराक्रान्तो रक्षकश्चेति वेत्स्यति ।
७ पित्तलस्य परावृत्यानेष्यामि शातकुम्भकं ।

लौहस्य परिवर्त्तेनानेष्यामि रजतं तथा ।
काष्ठस्य परिवर्त्तेनानेष्यामि पित्तलं तथा ।
ग्राव्णस्य परिवर्त्तेन लौहमानेष्यते तथा ॥
शुभरूपं करिष्यामि त्वदीयाध्यक्षमानवं ।
धर्मरूपं करिष्यामि त्वत्करग्राहकं जनं ।
१८ उपद्रवकथा देशे विनाशस्तव सीमनि ।
आपदस्य कथा नैव श्रोष्यते मानवैः पुनः ।
प्राचीरनामधेयं त्वं परित्राणं करिष्यसि ।
स्वद्वारनामधेयञ्च प्रशंसां त्वं करिष्यसि ।
१९ न स्थास्यति पुनः सूर्य्यो दीप्तिं कर्त्तुं दिवा तव ।
चन्द्रस्तुभ्यं विभावर्य्यां चन्द्रिकां न प्रदास्यति
तवालोकस्वरूपो हि भविष्यति परेश्वरः ।
तव तेजःस्वरूपश्च भविष्यति त्वदीश्वरः ।
२० नास्तं यास्यति सूर्य्यस्ते न च क्षेष्यति चन्द्रमाः ।
तवालोकस्वरूपो हि भविष्यति परेश्वरः ।
त्वदीयशोकदिनस्यावसानं भविष्यति ।
२१ पुण्यवन्तो भविष्यन्ति त्वदीयाः सकला नराः ।
यावदायुश्च देशस्य भविष्यन्त्यधिकारिणः ।
गौरवार्थं मदीयं हि मया संरोपिताङ्कुराः ।
विहिता मम हस्ताभ्यां भविष्यन्ति क्रियास्समाः ।

२२ संख्यामल्पलोकानां क्षुद्रा जातिर्महीयसी ।
परेशोऽहं करिष्यामि तत् सिद्धं समयोचिते ॥

६१ एकषष्टितमोऽध्यायः ।

१ खीष्टस्य कर्म्मणो वर्णनं ४ तस्य फलं १० धार्म्मिकाणां सुखञ्च ।

१ प्रभोः परेश्वरस्यात्मा सततं विद्यते मयि ।
यतो दीनमनुष्याणां सन्निधौ परमेश्वरः ।
सुसंवादप्रचाराय मामेव ह्यभिषिक्तवान् ।
बद्धुं भग्नमनोलोकान् मुक्तिं बन्दिजनान् प्रति ।
पूर्णमुक्तिञ्च कारायां बद्धान् प्रति प्रचारणे ।
२ अस्माकमीशदण्डस्य वासरञ्च परेशितुः ।
वर्षं घोषयितुं ग्राह्यं सर्व्वान् शोकाकुलान् जनान् ।
३ सान्त्वयितुञ्च सीयोनः शोकार्त्तानन्दनाय वै ।
भस्मनः परिवर्त्तेन सुन्दरं मुकुटन्तथा ।
शोकस्य परिवर्त्तेन तैलञ्च सुखरूपकं ।
दुःखितत्वपरावृत्त्या दातुं स्तोत्रं तथांशुकं ।
स्वगौरवाय तान् धर्म्मं द्रुमुद्यानं परेशितुः ।
उक्ता ख्यातान् प्रकर्त्तुञ्च कृतवान् प्रेषणं मम ॥
४ युष्मत्सुता निवेक्ष्यन्ति स्थानं चिरविनाशितं ।
पूर्व्वकालविनष्टस्य जीर्णमुद्धारयिष्यति ।
नगरेण परिग्रहत्वं यद् आपुरुषपरम्परं ।

नवीनं प्रकरिष्यन्ति परिभग्नं पुरञ्च तत् ।
५ चारयिष्यन्ति युष्माकं अजं स्थित्वा विदेशिनः ।
अन्यजातीयसन्ताना युष्माकं शस्यक्षेत्रके ।
कृषका हि भविष्यन्ति गोस्तनीक्षेत्रएव च ।
यूयन्तु परमेशस्य प्राप्य याजकरूढितां ।
ईशसेवकनाम्ना नः प्रख्यातास्च भविष्यथ ।
६ अन्यजातीयवित्तानां भोगं यूयं करिष्यथ ।
तेषामैश्वर्य्यतो यूयं प्रशंसां प्रकरिष्यथ ।
७ अपमानपरावृत्त्या मानं द्विगुणमाप्स्यथ ।
त्रपायाः परिवर्त्तेनाधिकारे नन्दमाप्स्यथ ।
यतो यूयं निजे देशे सुखं द्विगुणमाप्स्यथ ।
अनन्ता युष्मदानन्दा भविष्यन्ति विनिश्चितं ।
८ न्यायो यः परमेशस्य तत्र संप्रीयते मया ।
अपहारम् स्तुतीयेहम् अयथार्थे घृणा मम ।
अहं सत्यतया तेषां प्रदास्यामि क्रियाफलं ।
अनन्तनियमस्थैर्य्यं सार्द्धं तैश्च करिष्यते ।
९ अन्यजातीयमध्ये च प्रख्यास्यति तदन्वयः ।
प्रख्यास्यन्ति सुतास्तेषाम् अन्यमानुषमध्यतः ।
अर्थात् इमे परेशस्य वराप्तवंशका इति ।
सकला मनुजा दृष्ट्वा स्वीकरिष्यन्ति तान् जनान् ॥

१० परमेशे मयातीवानन्दनं प्रकरिष्यते ।
समुल्लासं करिष्यन्ति प्राणा ईशे मदीयकाः ।
यथा विभूषयेत् स्वं यत् धर्म्माध्यक्षवद् वरः ।
रत्नेन कन्यका यद्वत् भूषितां स्वां करोति च ।
तथा स त्राणवस्त्रेण सवस्त्रां मां करोति हि ।
आच्छादितां च मां कुर्य्याद् भव्यया पुण्यरूपया ।
११ यथाङ्कुरं धरा कुर्य्याद् उद्यानं तस्य वर्द्धयेत् ।
तथा प्रभुः परेशश्च सर्व्वजातीयगोचरे ।
पुण्यं प्रशंसनञ्चाभि अङ्कुरिते करिष्यति ॥

६२ द्विषष्टितमोऽध्यायः ।

१ समाजं प्रति भविष्यद्वक्तुः प्रार्थनं ६ तद्रक्षकाणां योग्यकर्म्मणो वर्णनञ्च ।

१ उदेति सियनोधर्म्मो यावन्नारुणवृष्टिवत् ।
ज्वलत्प्रदीपतुल्यञ्च तस्य त्राणं न जायते ।
सियोनं प्रति तावद्धि नाहं स्थास्यामि नीरवः ।
न च स्थास्याम्यहं शान्तो यिरूशालमपुरं प्रति ।
२ तेनान्यदेशजैर्लोकै धर्म्मो वीक्षिष्यते तव ।
भूपतीनां समूहेन द्रक्ष्यते तावकं महः ।
त्वं स्थास्यसि परेशस्य वक्त्रोक्तनव्यनामतः ।
३ भविष्यसि परेशस्य करस्थितकिरीटवत् ।

ईश्वरमुष्टिस्थितं राज्ञः किरीटत्वं प्रयास्यसि ।
४ तेन त्यक्ताख्यया नैव त्वं विख्याता भविष्यसि ।
न देशोऽपरशून्येन नाम्ना ख्यातो भविष्यति ।
मत्तुष्टिकारिणा नाम्ना प्रख्याता भविष्यसि ।
व्यूढानाम्ना च ते भूमिः प्रख्याता भविष्यति ।
यतस्त्वयि परेशस्तु परितुष्टो भविष्यति ।
तथा त्वदीयो यो देशः स हि व्यूढो भविष्यति ।
५ यथा युवमनुष्येणानूढा कन्या समुह्यते ।
तथा तव विवाहञ्च त्वन्निर्माता करिष्यति ।
यथा वरेण कन्यायामानन्दस्तु करिष्यते ।
तथा त्वयि तवेशेन महानन्दः करिष्यते ॥
६ त्वत्प्राचीरे यिरूशालम् नियुक्ता रक्षिणो मया ।
निरन्तरं दिवा रात्रौ न ते स्थास्यन्ति मौरवाः ।
७ यूयं शान्ता न तिष्ठत परेशाख्याप्रकाशकाः ।
स यिरूशालमं यावत् स्थिरं नैव करोति हि ।
मेदिन्यां तं प्रशंसायाः पात्रं यावत् करोति न ।
तथा कुरुत यथा शान्तः सहि नैव सुतिष्ठति ।
८ यतएव परेशेन स्वीयदक्षिणपाणिना ।
सबलेन भुजेनापि शपथोऽयं कृतः पुरा ।
तव शस्यानि शत्रुभ्यो न दास्यन्ते पुन र्मया ।

परिधायांशुकं रक्तं वस्रात आव्रजेच यः ।
ऐश्वर्य्यरूपवस्त्रेण भूत्वा यश्च समावृतः ।
बलाधिक्यमहत्त्वस्य समायाति करश्च च ।
धर्म्मप्रकाशकश्चाहं परित्राणाय पारगः ।
२ वसनं तावकीनं यत् तत्तु रक्तं कुतोऽभवत् ।
द्राक्षायन्त्रप्रमर्द्दीयस्तद्वत्ते भूषणं कुतः ॥
३ अहं दलितवान् द्राक्षां सकलामेकशः पुरा ।
नासीत् कोपि हि लोकानां मध्येच सहितोमया ।
अहं क्रोधेन तेषाञ्च दलनं कृतवान् पुरा ।
कोपश्च भरतस्तेषां पेषणं कृतवानहं ।
अतस्तेषामसृग्विन्दुर्न्यपतद्वसने मम ।
अभवन् मलसंयुक्ताः सकला मे परिच्छदाः ।
४ यतो मदीयचित्तेन स्मृतं प्रतिफलं दिनं ।
मदीयमुक्तलोकानां वत्सरः समुपस्थितः ।
५ ततो मया कृता दृष्टिः सहायकर्त्तास्ति कोपि न ।
चमत्कृत्य कृता दृष्टिः सहायो नास्ति कश्चन ।
अतो मदीयबाहुभ्यां मह्यं साधितो जयः ।
तथा क्रोधो मदीयस्तु कृतवान् मे सहायतां ।
६ ततः स्वकीयकोपेन मानुषा दलिता मया ।
तथा निजेन कोपेन परिपेष्यन्त ते जनाः ।

र्न्तिकायां मया तेषां शोणितं प्रनिपातितं॥
७ अस्माकं मङ्गलं यद्यत् कृतवान् परमेश्वरः।
अर्थात् स्वानुग्रहेणैव बह्वनुकम्पया तथा।
इस्रायेलवंशलोकानामकार्षीत् यत् शुभं महत्।
अहं तदनुसारेण तत्प्रशंसानुकम्पयोः।
८ स्मरणं कारयिष्यामि यतस्तेन प्रभाषितं।
मम लोका भविष्यन्ति ते सर्व्वेऽवश्यमेव हि।
बालकाश्च भविष्यन्ति ते ऽनृषावादिनो मम।
अतस्तेषां मनुष्याणां सोऽभवत् चाणकारकः।
९ तेषां सर्व्वेषु दुःखेषु दुःखितः सोऽभवन्नहि।
तन्मूर्त्तिरूपदूतेन परित्राताश्च ते जनाः।
प्रेम स्नेहञ्च कृत्वा च तेन ते परिमोचिताः।
पूर्व्वकालाद्दिनं कृत्स्नं धृत्वा तानवहत् पुरा।
१० अथाचरन्तस्ते तस्यात्मानं चक्रुश्च शोकिनं।
तेन तेषां भवन् शत्रुरयुध्यत् तैः समं सहि।
११ तस्य लोकाः पुराकालं मूसां स्मृत्वावदन्निति।
येन प्रजाविना सिन्धोरानीतास्तेषिता कुत्र सः।
तदन्तरे पवित्रात्मा स्थापितो येन कुत्र सः।
१२ स स्वस्यात्मे मुसादक्षे तेजोहस्तौ प्रचालयन्।
समक्षं तन्मनुष्याणां चकार द्विविधं जलं।

[illegible]

[illegible]

१ यदि [illegible] [illegible] [illegible] [illegible] त्वमेवाविरोहि चेत् ।
तव [illegible] [illegible] [illegible] [illegible] ।
२ यथा [illegible] [illegible] [illegible] [illegible] ।
[illegible] [illegible] [illegible] [illegible] [illegible] ।
त्वद्वैरिषु [illegible] [illegible] मदीयं संप्रकाशतां ।
तव साक्षात् प्रकम्पन्तां भिन्नजातीयमानुषाः ।
३ अनपेक्षितमस्माकं कृतं कर्म्म भयानकं ।
पर्य्यकम्पन्त शैलास्तु त्वयावरोहणे कृते ।
४ यतो निजाश्रितार्थं यः कर्म्माणि कुरुते स्वयं ।
त्वां विना तादृशो नेश केनापि क्वापि संश्रुतः ।
न कर्णगोचरो भूतश्चक्षुषा न निरीक्षितः ।
५ सानन्दं धर्म्मकर्म्माणि कुर्व्वन्ति येऽपि मानवाः ।
तथा त्वदीयमार्गे च त्वामेव संस्मरन्ति ये ।
तानेव मानुषान् सर्व्वान् त्वं साक्षात् प्रकरोषि च ।
अस्माकं पापकारित्वात् क्रोधवान् जायसे भवान् ।
आ पूर्व्वकालात् स्थितत्वात् त्राणं लप्स्यामहे किमु ।
६ अशुच च वयं सर्व्वेऽमेध्यद्रव्यसमाः किल ।
अशौचिवस्त्रतुल्यानि पुण्यकर्म्माणि नोऽभवन् ।

अस्माकं निखिलानां हि शुष्कपर्णस्य साम्यतः ।
अस्मदीयानि पापानि नयन्त्यस्मान् समीरवत् ।
७ न त्वां प्रार्थयते कोपि नत्वाश्रयति कोपि च ।
अतस्त्वया निजं वक्त्रं अस्मत्तः परिगोपितं ।
अधर्म्महेतुतोऽस्माकं अस्मानुद्वेजयस्यपि ।
८ किन्तु हे परमेश त्वम् अस्माकं जनकोभवेः ।
वयन्तु मृत्तिकारूपा निर्म्माणकारको भवान् ।
कृतानि तव हस्ताभ्यां वस्तूनि सकला वयं ।
९ परेश क्रुद्ध मातीव पापं नो मा चिरं स्मर ।
तव लोका वयं सर्व्वेऽस्मान् पश्य विनयामहे ।
१० त्वत्पवित्रपुरं सर्व्वम् अभवद् अटवीसमं ।
सियोन् काननवत् जातं नो नराः यिरूशालमि ।
११ अस्माकं पुरुषैः पूर्व्वैं भवान् यत्र प्रशंसितः ।
तत् सुन्दरं पवित्रञ्च गृहं दग्धं कृशानुना ।
तेनास्मदाङ्कितं द्रव्यं सर्व्वमुच्छिन्नतां गतं ।
१२ दृष्ट्वाप्येतानि किं शान्तो भविष्यसि परेश्वर ।
नीरवः सन् किमस्मभ्यमतिदुःखं प्रदास्यसि ॥

---

## ६५ पञ्चषष्टितमोऽध्यायः ।

१ अन्यदेशीयानां माह्वानं यिहूदिनामपाह्वानं ८ कतिपय लोकानां रक्षणं ११ दुष्टलोकानां शास्तिः १९ धार्म्मिकानां सुखञ्च ।

१ अधि मां यै र्न संपृष्टं विज्ञातस्तै र्जनैरहं ।
अधि मां यैस्तु नाचेष्टि संप्राप्तस्तै र्जनैरहं ।
यद्देशीया न विख्याता मम नाम्ना कदाचन ।
मां तेषामन्तिके पश्य मां पश्येति मयोदितं ।
२ लङ्घ्यते यै र्जनैराज्ञा स्वकल्पनानुसारतः ।
कुवर्त्मना प्रयायेत तानेव मनुजान् प्रति ।
कृत्स्नं दिनं निजौ हस्तौ विस्तृतौ प्रकरोम्यहं ।
३ मम साक्षादिमे लोका नित्यं मत्कोपकारकं ।
कर्म्म कुर्व्वन्ति चोद्याने बलिदानं प्रकुर्व्वते ।
प्रज्वालयन्ति च द्रव्यं सुगन्धिमिष्टकोपरि ।
४ निवसन्ति श्मशाने ते पर्व्वतस्य च गह्वरे ।
प्रयापयन्ति रात्रिञ्च घृष्टिमांसं प्रभुञ्जते ।
स्थापयन्ति स्वपात्रेषु घृण्यमांसरसानपि ।
५ मत्तो दूरं प्रगच्छ त्वं न चायाहि मदन्तिकं ।
अहं त्वत्तः पवित्रोऽस्मि वचएतद् वदन्ति ते ।
इमे धूमस्वरूपाः स्यु र्मदीयनासिकां प्रति ।
दिनं कृत्स्नं ज्वलन् वह्नि र्यथैतस्य तद्वदा अपि ।

६ पश्येदं परिक्षिप्तं लिखितं मम सन्निधौ ।
अवश्यं तत्फलं दास्ये नहि त्यक्ष्यामि गौरवः ।
वक्षस्थले नृणां तेषामहं दास्यामि तत्फलं ।
७ उच्यते परमेशेन यैर्जनैः पर्व्वतोपरि ।
सुगन्धिद्रव्यमादग्धं प्रत्यन्तपर्व्वतोपरि ।
हतं ममापमानञ्च युष्माकं तादृशास्तु ये ।
पूर्व्वीयपुरुषास्तेषामधर्म्मसम्भवं फलं ।
युष्मदधर्म्मजातञ्च दास्येहमेकदा फलं ।
तेषां पूर्व्वक्रियायाश्च फलं समुचितन्तु यत् ।
तन्मापयित्वा तेषां हि दास्ये वक्षस्थले मया ॥
८ इत्तोर्थ्यते परेशेन गुच्छे द्राक्षारसो यथा ।
प्राप्यते कथयेल्लोक इमं मा नष्टतां नय ।
अत्रैव विद्यते क्षेमं तथाहं सेवकान् प्रति ।
करिष्ये नहि सर्व्वेषां प्रकरिष्ये विनाशनं ।
९ याकूबो वंशमेकञ्च यिहूदा नामकान्तथा ।
अहमुत्पादयिष्यामि पर्व्वतस्याधिकारिणं ।
मन्मनोनीतलोकेन सोधिकारः करिष्यते ।
मदीयसेवकैस्तत्र वसतिश्च करिष्यते ।
१० अहं गवेषितो यैर्यै नृणां तेषां कृते ध्रुवं ।
मेषव्रजाय शारोणे स्थानमेकं भविष्यति ।

आखोरस्य शरीरे हि कलिता मधवत्सं ॥

११　त्यक्तः परेशो युष्माभि र्मेमाद्रिरपि विस्मृतः ।

तथा गाद्राय युष्माभि र्मेञ्चकोऽपि सज्जितः ।

मिनीके चैव पानीयं युष्माभिरुदसृज्यत ।

१२ अतो हेतो र्नियोक्ष्यामि युष्मान् खड्गस्य धारतः ।

मारणे सकला यूयं पतिताः संभविष्यथ ।

मयाहूता यतो यूयं प्रतिवाक्यमदत्त न ।

उदिते च मया यूयं नहि श्रोतुं समैच्छत ।

किन्तु व्यधायि युष्माभिः कुकर्म्म मम गोचरे ।

तदेव च मनोनीतं सन्तोषो नास्ति यत्र मे ।

१३ अतः प्रभुः परेशो यः स एतद् वचनं वदेत् ।

पश्य मदीयदासैश्च भोजनं प्रकरिष्यते ।

किन्तु यूयं क्षुधार्त्ता हि सर्व्व एव भविष्यथ ।

यूयं पश्यत मद्दासैः सम्यक् पानं करिष्यते ।

किन्तु नूनं तृषार्त्ताश्च सर्व्वे यूयं भविष्यथ ।

अवधत्त मदीया ये आनन्दिष्यन्ति सेवकाः ।

किन्तु यूयं सर्व्व एव ह्रियमेव गमिष्यथ ।

१४ अवधत्त मदीया ये दासेया ये हि सर्व्वशः ।

स्वरमुच्चैः करिष्यन्ति मनसां ह्लादकारणात् ।

किन्तु यूयं मनोदुःखात् आर्त्तनादं करिष्यथ ।

मनस्तापेन युष्माभिः क्रन्दनञ्च करिष्यते।
१५ मन्मनोनीतलोकानां समीपे नाम सर्व्वथा।
शापरूपं च युष्माकं स्थापयित्वा प्रजिष्यथ।
प्रभुणा परमेशेन युष्मान् सर्व्वान् निहत्य हि।
इतरे नामभिः ख्याताः करिष्यन्ते स्वसेवकाः॥
१६ अनन्तरं भुवो मध्ये यः स्वं धन्यं प्रमन्यते।
सत्येश्वरेण धन्यं स्वं मंस्यते स हि मानवः।
यो भूमौ शपथं कुर्य्यात् कुर्य्यात् सत्येशनामतः।
विस्मरिष्यति प्राग्दुःखं यद्दृष्टिञ्छादयिष्यते।
१७ पश्य यत् नूतनां पृथ्वीं स्रक्ष्यामि नूतनं नभः।
यदासीत् स्मरणे पूर्व्वं नहि स्थास्यति तत् ततः।
पुनः कदापि तन्नैव मानसे संभविष्यति।
१८ किन्त्वहं यत् प्रस्रक्ष्यामि यूयं तत्रैव सर्व्वदा।
करिष्यथ समाह्लादं महानन्दं करिष्यथ।
अवधस्यानन्दरूपं करिष्ये यिरूशालमं।
तथाह्लादस्वरूपांश्च करिष्ये तस्य मानवान्।
१९ यिरूशालममुद्दिश्य मयानन्दः करिष्यते।
अधि स्वकीयलोकांश्च मयाह्लादः करिष्यते।
तत्र क्रन्दनशब्दश्च हा हा च श्रोष्यते नहि।
२० तत्र बालो नचाल्पायुर्वृद्धोऽपूर्णायुरेव च।

म्रियते शतवर्षों यः स बालो मंस्यते जनैः।
शतवर्षे मृतः पापी शापग्रस्तो भविष्यति।
२१ एते गृहान् विनिर्माय वत्स्यन्ति तेषु मानवाः।
कृत्वा ते गोस्तनीक्षेत्रं भोक्ष्यन्ते तत्फलानि च।
२२ निर्माति-यद्गृहं तत्रान्योलोको न निवत्स्यति।
यं वृक्षं रोपयेत्तस्मान्ये फलं नहि भुञ्जते।
वृक्षस्यायुर्यथा तद्वन्मल्लोकायु र्भविष्यति।
मनोनीता मदीया ये भवन्ति ते नरैः सदा।
स्वस्वहस्तकृतं कर्म यावत् शेषं प्रभोक्ष्यते।
२३ ते मानवा वृथा नैव करिष्यन्ति परिश्रमं।
हठात् नष्टं न बालानां जननं तैः करिष्यते।
ते जैने सद्‌पत्यैश्च परेशात् प्राप्स्यते वरः।
२४ तेषां प्रार्थनतः पूर्व्वम् उत्तरं दास्यते मया।
तैर्जनैरुक्तमात्रश्च वचनं श्रोष्यते मया।
२५ परेशो वृक्षि मेषेण चरिष्यन्ति वृकाः सह।
यवसानि यथा गोभि र्भोक्ष्यन्ते हरिभिस्तथा।
भक्ष्यवस्तूनि सर्पाणां संभविष्यन्ति धूलयः।
पूताद्रौ मे करिष्यन्ति नहि हिंसाविनाशने॥

---

## ६६ षट्षष्टितमोऽध्यायः।

१ परमेश्वरीयानुग्रहकथनं ३ कपटिनः प्रति तिरस्कारणं ५ नम्रलोकानां सान्त्वनं ७ समाजस्य वृद्धिः सुखञ्च १५ दुष्टलोकानां विनाशनञ्च।

१ परेशो वक्ति स्वर्गो हि मम सिंहासनं भवेत्।
वसुन्धरा मदीयस्य पादपीठं भवेदिह।
तर्हि यूयं कृते मे क प्रनिर्म्मास्यथ मन्दिरं।
मामकीनन्तु विश्राम्यं स्थानं कुत्र प्रविद्यते।
२ उच्यते परमेशेन वस्तून्येतानि सर्व्वशः।
कृतत्वात् मम हस्ताभ्यां वर्त्तमानानि सन्ति वै।
किन्तु नम्रमना यस्तु यश्च चुग्नमना भवेत्।
मद्वाक्यात् कम्पितो यश्च तस्मै दृष्टिं करोम्यहं॥
३ गोवलिर्दीयते येन मानवस्तेन हन्यते।
यो मनुष्यो वलिलेन ददाति मेषशावकं।
मस्तकः सारमेयस्य तेन लोकेन छिद्यते।
नैवेद्यमुत्सृजेत् यस्तु कोलरक्तं ददाति सः।
यो जनो ज्वालयेद्धूपं प्रतिमां स प्रशंसति।
ते नराः स्वस्वपन्थानं मनोनीतं प्रकुर्व्वते।
घृणद्रव्ये मनस्तेषां परितृप्तिं प्रयाति च।
४ अतो मया विपत्तेषां मनोनीता करिष्यते।

यस्माद् बिभ्यति ते तद्धि घटयिष्यामि तान् प्रति ।
मयाहूतोऽददात्तेषां प्रतिवाक्यं न कश्चन ।
उदिंतेपि न केनापि तत् संश्रोतुं समैष्यत ।
किन्तु साचाम्मदीयं यन्नाशुभं तदभाष्यत ।
यन्मदीयमसन्तोषि मनोनीतं तदेव तैः ॥
५ कथाभिः परमेशस्य ये यूयं कम्पिता जनाः ।
ते यूयं परमेशस्य निशामयत वाग्मिमाः ।
ऋतीयन्ते च ये युष्मान् युष्माकं सहजा नराः ।
मन्नामार्थञ्च ये युष्मान् दूरयन्ते बलादपि ।
ते वदन्ति परेशस्य महिमा संप्रकाशतां ।
किन्तु युष्मन्नन्दहृते स प्रत्यक्षो भविष्यति ।
तस्मात्ते मानवाः सर्व्वे ब्रीडां प्राप्स्यन्ति निश्चितं ।
६ मन्दिरात् श्रूयते शब्दो नगरात् कालहो ध्वनिः ।
फलदातुः परेशस्य शत्रुभ्यः श्रूयते स्वनः ॥
७ प्रसूते वेदनापूर्व्वं गर्भस्य यातनापुरा ।
पुत्रो बहिर्विनिर्गच्छेत् श्रुतवान् कइदं वचः ।
८ एतादृशस्य कार्य्यं को मनुष्यः परिदृष्टवान् ।
एकस्मिन् दिवसे किं स्याद् राज्यसन्दोहसम्भवः ।
कश्चिद्देशो जनव्रातो निमेषैकेण जायते ।
गर्भीयवेदनामात्रे सियोन् स्वनुं प्रसोष्यते ।

९ परेशो वक्त्यहं यावत् जन्मकालं सुरक्ष्य च ।
किमन्ते जननं कर्तुं शक्तिं नहि ददाम्यहं ।
त्वदीय ईश्वरो यः स इति वाचं प्रभाषते ।
अहं जनयिता कुर्य्यां किमु प्रसवरोधनं ।
१० आनन्दत तया सार्द्धं यिरूशालमि प्रेमिणः ।
यूयं तथैव सार्द्धञ्च हृष्टतां परिगच्छत ।
तत्कृते शोकलोका आह्लादध्वं भृशं सदा ।
११ यत् सान्त्वनास्तनं पीत्वा तृप्ततां परियास्यथ ।
ततः सुभक्ष्यं निर्याप्य पायिष्यध्वे मर्दाङ्गुभिः ।
१२ परेशो वक्ति पश्चाहं तटिन्या क्षेमरूपया ।
अन्यदेशीयलोकानां स्वापतेयस्वरूपया ।
उच्छलन्त्या च नद्याहं करिष्ये प्लावितञ्च तं ।
पायिष्यते च युष्माभिः स्तन्यं यूयञ्च क्रोडतः ।
प्रवक्ष्यध्वे च जानुभ्यां नर्त्तयिष्यध्व एव च ।
१३ सान्त्वयिष्ये तथा युष्मानपत्यं जननी यथा ।
लप्स्यते सान्त्वना सम्यग् युष्माभि र्यिरूशालमि ।
१४ दृष्टेष्वेतेषु युष्माकं मन आनन्दमेष्यति ।
युष्मदस्थि सतेजस्कं तृणवत् संभविष्यति ।
द्योतिष्यते परेशस्य पाणी भृत्यजनान् प्रति ।
समेष्यति प्रकाशञ्च तत्क्रोधो वैरिणः प्रति ॥

१५ पश्चाग्निवत् परेशेनागमनं संविधास्यते ।
महाप्रबलवज्रेणेव रथस्तस्यागमिष्यति ।
तापेन महता मर्षं निजं स दर्शयिष्यति ।
ज्वलता वह्निना स्वीयं शापञ्च दर्शयिष्यति ।
१६ असिना वह्निना सर्व्वै र्जन्मिभिः सह योत्स्यति ।
घानिष्यन्ते परेशेन भूरिशो मानवा सदा ।
१७ इदं परेशिता भूते ये जना घार्ष्टमामिषं ।
मूषिकञ्चार्त्तनद्रव्यं परिभक्ष्याद्दस्य वै ।
व्यवस्थयोद्यानमध्ये स्वात्मनः पावयन्ति च ।
परिष्कृतांश्च कुर्व्वन्ति नंक्ष्यन्ति युगपद्धि ते ।
१८ यतस्तेषां क्रियां सर्व्वां जानामि कल्पनामपि ।
सर्व्वदेशीयलोकानां सर्व्वभाषाप्रभाषिणां ।
समयः संग्रहं कर्त्तुमागमं प्रकरिष्यति ।
समागत्य मदीयश्चै द्रक्ष्यते महिमा जनैः ।
१९ चिह्नमेकमहं तेभ्यो नृभ्यो दास्यामि निश्चितं ।
अहं तेषां मनुष्याणामवशिष्टमनुष्यकान् ।
समीपं प्रेरयिष्यामि दूरदेशनिवासिनां ।
पूलूदौ धन्विनौ तर्शिस्तूवल् यूनान् द्वमान् प्रति ।
ये दूरदेशिभिश्चैव संश्रुतं न यशो मम ।
न च दृष्टं मदैश्वर्य्यं प्रेषयिष्यामि तान् प्रति ।

महत्त्वं द्योतयिष्यन्ति तेऽन्यदेशजसन्निधौ ।
२० वदेत् परेश इत्थायेल् वंशाः पात्रे पवित्रके ।
मन्दिरं परमेशस्य नैवेद्यमानयन्ति हि ।
अश्वैरश्वतरैर्यानैः शिविकाभिः क्रमेलकैः ।
सर्व्वेभ्यएव देशेभ्यो यिरूशालमि संस्थितं ।
अर्थान्मम पवित्राद्रिम् उद्दिश्य परमेश्वरं ।
आनयिष्यन्ति नैवेद्यं समस्तस्तद्भ्रातृ वः ।
२१ अपरं परमेशेन वाक्यमेतदुदीर्य्यते ।
याजकानां निमित्तञ्च लेवीयानां कृतेप्यहं ।
तेषां मध्यात् कियल्लोकान् संग्रहीष्यामि निश्चितं ।
२२ यतः परेश्वरो वक्ति ये नूत्ने मेदिनीदिवौ ।
अहं स्रक्ष्यामि ते नित्यं स्थास्यन्ति मम सम्मुखे ।
तथा स्थास्यन्ति युष्माकं वंशनामानि सर्व्वदा ।
२३ वर्त्तीशः प्रत्यमावास्यं प्रतिविश्रामवासरं ।
एष्यन्ति प्राणिनः सर्व्वे संभक्तुं मम सम्मुखं ।
२४ यैर्लङ्घिता मदीयाज्ञा वहिः संगम्य मानुषाः ।
वीक्षिष्यन्ते शवांस्तेषां कीटा यास्यन्ति नो मृतिं ।
निर्व्वास्यति नचाग्निश्च ते घृणाः सर्व्वजन्मिनः ॥

समाप्तं ॥